And when he died, he did not forget to pay his final respects to his parents before leaving this world.

नायकः—(किंचिदुन्मीलिताक्षः पितरौ पश्यन्) तात अम्ब अयं मे पश्चिमः प्रणामः। (V. 115.)

8. **His love.**—But he was not a woman-hating ascetic; he fell in love with the heroine at first sight and praised her beauty. The Vidushaka, clever in such affairs, observed it at once.

नायकः—(सस्पृहमवलोकयन्)......एतत्पुनरहं जानामि।

स्वर्गस्त्री यदि तत्कृतार्थमभवच्चक्षुःसहस्रं हरेः
नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः सति।
जातिर्नः सकलान्यजातिजयिनी विद्याधरी चेदियं
स्यात्सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः॥ (I. 38.)

His love for Malayavati was sincere, like her love for him; and his heart could not entertain the idea of marriage with another. So he refused the offer of Mitravasu, thinking that it referred to some other maiden.

विदूषकः—(अपवार्य) भो जानामि। न तां वर्जयित्वान्यस्मिंश्चित्तं तेऽभिरमते। (II. 71.)

नायकः—मित्रावसो क इव नेच्छति भवद्भिः सह श्लाघ्यमीदृशं सम्बन्धम्। किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्तयितुम्। अतो नाहमेनां प्रतिग्रहीतुमुत्सहे। (II. 73.)

He did not like to wound the feelings of others. Hence his reply was politely worded.

As usual with love-sick heroes, he had to pass through a good deal of suffering, but that did not make him forget his duties. He almost lost his natural fortitude in his suffering, but did not neglect his service to his parents. He served them as before, but only finished his duty a little earlier.

विदूषकः—भो वयस्य कुत्र खलु गतं ते तद्धीरत्वम्। (II. 26.)
विदूषकः—......भो वयस्य कस्मात्पुनरद्य त्वं लब्ध्वेव गुरुजनं शुश्रूषयित्वेहागतः। (II. 28.)

9. **His spirit of self-sacrifice.**—This trait in his character was most clearly manifested in this drama. It has been brought out in contrast with three other types of character in three different scences—first (I. 7-15) a pure sensualist, the *summun bonum* of whose existence was eating and other physical enjoyment, next (III. 69-78) a prince who was fond of dignity and power: and lastly (IV. 29—78) a subject, who wished his name to be handed down as a model of obedience and loyalty to his king, and as one who had saved the life of a nation even for a day. The hero surpassed all the three; he cared neither for the pleasures of this world nor for dignity and power; but wanted to render help simply for its own sake.

शङ्खचूडः—हा निष्कारणपरोपकारव्रत। (V. 119.)

He was always seeking opportunities of doing good to others even at the cost of his life.

नायकः—......(आत्मगतं) अपि नाम शक्नोम्यहं स्वशरीरदानादेकस्यापि फणभृतः प्राणरक्षां कर्तुम्। (IV. 23.)

He considered his body useless if he could not help a man in distress.

नायकः—(सकरुणं) आर्तं कण्ठगतप्राणं परित्यक्तं स्वबान्धवैः।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः॥ (IV. 55.)

He felt blissfully happy when he was carried off by Garuda, but was sorry when Sankhachuda's disclosure prevented the completion of the repast.

नायकः—(आत्मगतं) दिष्ट्या कृतार्थोऽस्मि । (IV. 86.)
नायकः—(शङ्खचूडं पश्यन्नात्मगतं)कथं विफलीकृतो मे मनोरथः शङ्खचूडेनागच्छता । (V. 59.)

He was so fond of self-sacrifice that everything conducive to it was pleasing to him, although in reality it was terribly painful. He considered the touch of the stone of slaughter as more pleasing than the touch of Malayavati or of his mother.

नायकः—न तथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा ।
अभिवाञ्छितार्थसिद्ध्यै वध्यशिलेयं यथाश्लिष्टा ॥

अथवा किं मलयवत्या ।

शयितेन मातुरङ्के विस्रब्धं शैशवे न यत्प्रासम् ।
लब्धं सुखं मयास्या वध्यशिलायास्तदुत्सङ्गे (IV. 82.)

His love for Malayavati, his devotion to his parents and his pity were all subservient to his spirit of self-sacrifice. They were all set aside, when an opportunity for self-sacrifice offered itself. He did not stop for a moment to consider that his parents and his wife might not survive him a minute.

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः
किं रक्ष्या बहवः किमेक इति ते जाता न चिन्ता कथम् ।
तार्क्ष्यात्त्रातुमहिं स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूरिति हतं निःशेषमेतत्कुलम् ॥ (V. 70.)

He thought that his marriage with Malayavati had become fruitful, when he got the pair of red cloth as a present.

नायकः—...सफलीभूतो मे मलयवत्या पाणिग्रहः । (IV. 80.)

He would even prefer rebirth to salvation, if only he could have opportunities of helping others in every one of his future births.

नायकः—(सपरितोषं) संरक्षता पन्नगमद्य पुण्यं मयार्जितं यत्स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात्परोपकाराय शरीरलाभः ॥ (IV. 84.)

That was his last desire. He proved himself superior to the greatest benefactors of old days.

शङ्खचूडः—(सविषादं) अहो जगद्विपरीतमस्य महासत्वस्य चेतः । कुतः

विश्वामित्रः श्वमांसं श्वपच इव पुराभक्षयद्यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।
पुत्रोऽयं कश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थे जहाति ॥ (IV. 69.)

But when his parents appeared before him, his sense of duty to them sprang up in his mind and he asked Sankhachuda to cover his body, lest they should be distressed at his condition and give up their lives; and to bring his hands together so that he might salute them: but this was only when the sacrifice was over.

नायकः—(ससंभ्रमं) शङ्खचूड समुपविश्योत्तरीयेणाच्छादितशरीरं कृत्वा धारय माम् । अन्यथा कदाचिदीदृगवस्थं मामालोक्य पितरौ सहसा जीवितं जह्याताम् । (V. 69.)

नायकः—(अञ्जलिं कर्तुमिच्छन्) शङ्खचूड समानय मे हस्तौ । (V. 113.)
नायकः—......तात अम्ब अयं मे पश्चिमः प्रणामः । (V. 115.)

When Garuda requested him for advice, he asked him to wait till he had rendered his obeisance to his parents.
नायकः—प्रतिपालय क्षणमेकम् । पितरौ मे प्राप्तौ यावदेतौ प्रणमामि । (V. 76.)
He took his father's permission before giving his advice.
जीमूतकेतुः—वत्स एवं क्रियताम् । (V. 101.)

The hero's character is very well summed up in the following estimate of his father:—

निराधारं धैर्यं कमिव शरणं यातु विनयः
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता ।

हतं सत्यं व्रजतु च कृपा क्वाद्य कृपणा
जगज्जातं शून्यं त्वयि तनय लोकान्तरगते ॥ (V. 117.)

as well as in that of Mitravasu :—

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां संमतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान्विनीतो युवा ।
यश्चासूनपि संत्यजेत्करुणया सत्त्वार्थमभ्युद्यतः । (II. 57.)

## 2. SANKHACHUDA

Sankhachuda is the most admirable character in the drama next to the hero. He suffers only when compared with the hero. As the hero is a Bodhisattva, there is no wonder that he is prepared to give up his life for another, but that Sankhachuda, a *Naga*, should offer his life voluntarily, even when he had an opportunity to save it, is simply admirable.

बहुजन्मसिद्धमेतच्चित्रं जीमूतवाहनस्य कियत् ।
श्लाघ्यः स शङ्खचूडो मरणोत्तीर्णोऽपि यो रिपवे ॥
अन्यप्रदत्तात्मानं प्राप्य सुदूरं गताय तार्क्ष्याय ।
पश्चाद्धावन् गत्वा स्वं देह मुपानयत्प्रसभम् ॥

(*Kathasaritsagara* XC. 205—206.)

1. Being a *Naga*, he possessed two tongues and three hoods and wore a slough over his body; but in his human form, he was handsome in appearance, and possessed a tender body, as he had been brought up in the nether-world never lighted by the rays of the sun.

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुको
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि ।
तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुःसहशोकफूत्कृतमरुत्स्फीताः फणाः पश्यसि ॥ (V. 61.)

वृद्धा—......क्व ते पुनरीदृशं पूर्णिमाचन्द्रसदृशं मुखं प्रेक्षिष्ये । (IV. 51.)

वृद्धा—(चिरं निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती) हा पुत्रक ! कथमेतत्तेऽदृष्टसूर्यकिरणं सुकुमारं शरीरं निर्घृणहृदयो गरुड आहारयिष्यति। (IV. 33.)

2. He was a typical citizen. He respected the King's orders above all and set private affairs aside, although he had to give up his life in doing so.

शङ्खचूडः—(शिरस्यञ्जलिं कृत्वा सादरं) किमाज्ञापयति स्वामी। (IV. 43.)

शङ्खचूडः—(सादरं) उपनय (इति गृहीत्वा) गृहीतः शिरसि स्वाम्यादेशः। (IV. 47.)

3. He loved his mother very dearly and was afraid that she would die for him. He was agitated at her distress.

शङ्खचूडः—अम्ब किमेवमतिविक्लवतया सुतरां नः पीडयसि। (IV. 32.)

शङ्खचूडः—(दुःखातिशयान्मातुर्हृदयस्फोटं शङ्कमानो मातरं प्रति)..........
(स्वहस्तेन मातुरश्रूणि मार्जयन्) अम्ब किमिति वैक्लव्यं ते । मातः समाश्वसिहि समाश्वसिहि। (IV. 53.)

He could not die without consoling her and requested the hero to take care of her after his death.

शङ्खचूडः—......अथानुकम्पनीया वयं तदियमस्मद्विपत्तिविक्लवाम्बा यथा न परित्यजति जीवितं तथाभ्युपायश्चिन्त्यताम्। (IV. 71.)

His mother was so dear to him that he desired to be born as her son in his future births, so that he might love and be loved by her. The hero's aspirations were nobler.

शङ्खचूडः—......(मातुरग्रतो जानुभ्यां स्थित्वा शिरोनिहिताञ्जलिः।)

अम्ब त्वमपि निवर्तस्वेदानीम्।
समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम्।
तस्यां तस्यां प्रियसुते माता भूयास्त्वमेव नः॥ (IV. 75.)

Sankhachuda's mind was not so absorbed with the desire of self-sacrifice as to exclude every other feeling from it. But the hero had no other thought in his mind.

4. Sankhachuda too did not care for his body and, like the hero, he knew that death was a natural sequence to birth.

शङ्खचूडः—अम्ब अलं परिदेवितेन । पश्य—

क्रोडीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥ (IV. 34)

He too was bold, and rose to the occasion when he saw Garuda devouring the hero, and bared his own breast to the King of Birds.

शङ्खचूडः—(ससंभ्रममुपसृत्य) तार्क्ष्य तार्क्ष्य ! न खलु न खलु साहसमनुष्ठेयम् । नायं नागः । परित्यजैनम् । मां भक्षय । अहं तवाहारार्थं वासुकिना प्रेषितः (इत्युरो ददाति) (V. 58.)

But his self-sacrifice was inspired by his love of glory. He was sorry because he had to suffer the humiliation of being saved by another, and thus bringing dishonour to his family. He accused the hero of having robbed him of his glory.

शङ्खचूडः—...(नायकमुद्दिश्य)......तदलमनेन निर्बन्धेन । पश्य—

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थं बद्धकक्षाणां त्वादृशामुद्भवः कुतः ॥ (IV. 69.)

शङ्खचूडः—...(आत्मानमुद्दिश्य) हा हतोऽस्मि मन्दभाग्यः । हा शङ्खचूडहतक ! किं त्वया कृतम् ।

नाहित्राणात्कीर्तिरेकाहमाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा ।

दत्वाऽऽत्मानं रक्षितोऽन्येन शोच्यो
हा धिक्कष्टं तेन वा वञ्चितोऽस्मि ॥

तन्नाहमेवं विधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि । (V. 23.)

His admiration for the hero was so great that he refused to go home and was determined to die if the latter did not survive.

शङ्खचूडः—अम्ब सत्यमेवैतत् यदि कुमारः स्वस्थो भविष्यति । (V. 108.)

शङ्खचूडः—...तदवश्यमेव भवन्तमन्वेति शङ्खचूडः । (V. 119.)

शङ्खचूडः—(सास्रं)यदाज्ञापयन्ति गुरवः । नन्वग्रग एवाहं युष्माकम् ।
(V. 125.)

The character of Sankhachuda appears more admirable in the original than in the drama. Perhaps the dramatist degraded his character only to glorify that of the hero still more.

### 3. THE VIDUSHAKA (Atreya.)

1. The Vidushaka is always represented as ugly and deformed and Atreya was no exception ; he himself said that he was very often compared to a monkey by his friend, the hero. He also carried a crooked stick in his hand.

विटः—(विदूषकं निरूप्य सरोषमुत्थाय च) अरे कपिलमर्कटक !
त्वमपि मां शेखरकं प्रतारयसि । (III. 16.)

विटः—क क कपिलमर्कटक पलायसे ? (III. 20.)

विदूषकः—(सहर्षं) भवति जीवितोऽस्मि । तत्करोतु भवती प्रसादं येनैव मां पुनरपि न भणति यथा त्वमीदृशस्तादृशः कपिलमर्कटाकार इति ।
(III. 57.)

विदूषकः—(हस्तेन मुखं प्रमृज्य हस्तं दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य) (III. 62.)

He is always represented asa Brahman, though only in name. He is ignorant of learning, and tries, though unsuccessfully, to hide his ignorance.

विदूषकः—भवति अनेन सीधुगन्धेन पिनद्धानि मे वेदाक्षराणि। (III. 36.)

विदूषकः—भो मित्र बिभेति खल्वेषा। अहं पूर्वपठितविद्याबलेन साम्प्रतमेनां मुहूर्तं धारयामि। (I. 54.)

2. His short-sighted stupidity is truly laughable; when the bees swarm round him, he tries to veil himself like a woman; and this lands him in another hole.

विदूषकः—...तत्किमिदानीमत्र करिष्यामि। अथवा एतेनैव मलयवत्याः सकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीवेषं विधायोत्तरीयकृतावगुण्ठनो गमिष्यामि। (III. 5.)

He was so stupid as to think that Sekharaka, the Vita, became sober in few minutes.

विदूषकः—(स्वगतं) दिष्ट्यापगत इवास्य मदावेगः। (III. 64.)

Sometimes, he intentionally put on the mask of stupidity for the diversion of his friend whom he loved dearly. He allowed his face to be blackened by the Cheti by means of the juice of Tamala leaves.

चेटी—(स्वगतं) यावदेष निमीलिताक्षस्तिष्ठति तावन्नीलरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकरिष्यामि। (III. 58.)

3. He was vain of his Brahmanic birth and of the companionship of the king; but sometimes demeaned himself, as when he got ready to fall at the feet of the Cheti, when he saw no other way of escape.

विदूषकः—(सरोषं सकम्पं च) भो गन्धर्वराजमित्रं ब्राह्मणो भूत्वा दास्याः पुत्र्याः पादयोः पतिष्यामि। (III. 23.)

विदूषकः—...अथवा किं मम भवत्या सह विवादेन। एष ते ब्राह्मणः पादयोः पतति। (III, 36.)

4. He could lie without a scruple whenever there was a necessity for it.

विदूषकः—भो वयस्य लब्ध्वेवागतोऽस्मि। किं पुनर्विवाहमङ्गलमहोत्सवमिलितसिद्धविद्याधरापानकदर्शनकौतूहलेन परिभ्रमन्नेतावतीं वेलां विलम्बितोऽस्मि। (III. 50.)

5. He was a glutton; and reverted to the subject of eating whenever there was the least occasion for it.

विदूषकः—...तदिदानीं मध्याह्नसूर्यसन्तापद्विगुणित इव मे जठराग्निर्धमधमायते। तदेहि निष्क्रमावः येन ब्राह्मणोऽतिथिर्भूत्वा मुनिजनसकाशाल्लब्धैः कन्दमूलफलैरपि प्राणधारणं करिष्ये। (I. 66.)

6. He was always drowsy and indulged himself in sleep whenever he could snatch a moment's leisure.

चेटी—आर्य त्वं मया विवाहजागरणे निद्रायमाणो निमीलिताक्षः शोभनो दृष्टः। (III. 58.)

7. He loved his friend and was always faithful to him. But his mind could not think of any pleasure for his friend, higher than that of royalty.

विदूषकः—...इदानीमपि तावद्गुरुचरणशुश्रूषानिर्बन्धाद्विसृज्य इच्छाभोगरमणीयं राज्यसुखमनुभूयताम्। (I. 8.)

But when he found that his friend did not value mundane pleasures, he cunningly inserts the bait of kingly duty. He said that his kingdom would be occupied by his enemies and he would lose it.

विदूषकः—भो वयस्य अत्यन्तसाहसिको मतङ्गहतकस्ते प्रतिपक्षः। तस्मिंश्च समासन्नस्थिते प्रधानामात्यसमधिष्ठितमपि त्वया विना राज्यं सुस्थितमिति न मे प्रतिभाति। (I. 12.)

His actions and speeches were always directed towards giving pleasure to his friend. When he observed that his friend was curious to see the heroine, he dragged him, though unwilling, into the temple; and made the heroine stay there as long as he could, so that his friend might see her as long as possible.

विदूषकः—भो वयस्य अवसरः खल्वावयोर्देवीदर्शनस्य । तदेह्युपसर्पावः ।

नायकः—न तावत्प्रविशामि । (विदूषकोऽनिच्छन्तमपि नायकं बलादाकर्षति । उभौ देवालयं प्रविशतः ।) (I. 45. 46.)

विदूषकः—...अहं पूर्वपठितविद्याबलेन साम्प्रतमेनां मुहूर्तं धारयामि । (I. 51.)

Again when he found that his friend's mind was too full of thoughts of the heroine and did not find pleasure in other topics, he did not want to trouble him with them, but himself spoke in the same strain.

विदूषकः—(आत्मगतं) अभिरमत एष एतया कथया । तद्भवतु एतामेव वादयिष्यामि । (II. 46.)

He loved his friend so much that he would do the most humiliating thing for his pleasure. He allowed his face to be blackened and left his presence so that the hero might enjoy the company of the heroine undisturbed.

विदूषकः—...(नायकं निर्दिश्य) भो युवयोः पुरत एवाहं दास्याःपुत्र्या खलीकृतः । तत्किं ममेह स्थितेन । अन्यतो गमिष्यामि तावत् । (निष्क्रामति) (III. 62.)

### 4. MITRAVASU.

We see very little of Mitravasu and from what we see of him, we infer that he is a hasty, matter-of-fact gentleman, with a high sense of his honour and dignity.

I. When he met the hero for the first time, he opened the conversation abruptly with the offer of his sister to him without any preface; and naturally, not knowing who she was, the hero declined the offer, at which his honour was touched.

मित्रावसुः—(प्रकाशं) एवं निवेदितात्मनोऽस्मान्प्रत्याचक्षाणः कुमार एव बहुतरं जानाति । (II. 76.)

His high sense of honour is exhibited in another instance; when the hero's kingdom was occupied by Matanga, he felt he should have killed the usurper first, and then informed the hero of the incident, like a true warrior.

अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम् ।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः ॥ (III. 69.)

He was eager for revenge; but could not start the campaign without permission from the hero.

मित्रावसुः—...अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि । (III. 69.)

मित्रावसुः—अतस्तदुच्छित्तये आज्ञां दातुमर्हति कुमारः । (III. 75.)

2. He was a great warrior and was competent to kill Matanga single-handed and without the help of an army.

मित्रावसुः—...अथवा किं बलौघैः ।

एकाकिनापि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।
अद्रेर्निपत्य हरिणेव मतङ्गजेन्द्र-
माजौ मतङ्गहतकं हतमेव विद्धि ॥ (III. 75.)

नायकः—...मित्रावसो कियदेतत् । बहुतरमपि बाहुशालिनि त्वयि संभाव्यते । (III. 76.)

A person of this nature could not but treat with contempt the resignation of the hero.

मित्रावसुः—(सामर्षं सहासं च) कथं नानुकम्प्यत ईदृशोऽसावस्माकमुपकारी कृतज्ञश्च । (III. 77.)

3. He loved his sister and father very dearly : and he had worldly-wisdom too.

मित्रावसुः—...अहं तु स्नेहपराधीनतयान्यदेव किमप्यवस्थान्तरमनुभवामि । (यतः)

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां संमतो
रूपेणाप्रतिमः पराक्रमधनः विद्वान्विनीतो युवा ।
यश्चासूनपि सन्त्यजेत्करुणया सत्त्वार्थमभ्युद्यतः
तेनास्मै ददतः स्वसारमतुलां तुष्टिर्विषादश्च मे ॥ (II. 57.)

And later, he was anxious that his sister's husband should not expose himself to danger.

मित्रावसुः—कुमारेणापि बहुप्रत्यवायेऽस्मिन्प्रदेशे कुतूहलिना न चिरं स्थातव्यम् । (IV. 27.)

## 5. GARUDA.

Like Sankachuda's, Garuda's character has been made less noble and more savage in the drama than in the original, perhaps for the same reason.

I. He was terribly strong, and equally merciless ; he was thus feared and respected even by the Immortals.

नायकः—...(दिशोऽवलोक्य) यथा चायं चलितमलयाचलशिलाचयः प्रचण्डो नभस्वांस्तथा तर्कयाम्यासन्नीभूतः पक्षिराज इति ।

तुल्याः संवर्तकाभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां
तीरे वेगानिलोऽम्भः क्षिपति भुव इव प्लावनायाम्बुराशेः ।
कुर्वन्कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रै-
र्देहोद्योतैर्दशाशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः ॥ (IV. 82).

गरुडः—दृष्ट्वा बिम्बं हिमांशोर्भयकृतवलयां संस्मरन् शेषमूर्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।
एष प्रान्तापसर्पज्जलधरपटलैरायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिग्रासगृध्नुः क्षणेन ॥ (IV. 83.)

गरुडः—(नायकं निर्वर्ण्य)

अस्मिन्वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिदण्डचण्डतरया चञ्च्वाधुना वक्षसि ।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा ॥ (IV. 85 )

When there was a shower of celestial flowers and a beating of celestial drums acclaiming the self-sacrifice of the hero, he proudly thinks that his own strength and speed have been the cause.

गरुडः—(विहस्य)

आं ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातो
मन्द्रं संवर्तकाभ्रैरिदमपि रणितं जातसंहारशङ्कैः ॥ (IV. 85.)

2. Even such a terrible and savage creature was struck with astonishment at the bravery and fortitude of the hero, and confessed that his prey was braver than himself.

गरुडः—(आत्मगतं) जन्मनः प्रभृति भुजङ्गपतीनश्नता नेदृशमाश्चर्यं मया दृष्टपूर्वम् । यदयं महासत्त्वो न केवलं नव्यथते प्रत्युत प्रहृष्ट इव किमपि दृश्यते । तथा हि ।

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदधे-
र्मांसोत्कर्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम् ।
गात्रं यन्नविलुप्तमेष पुलकस्तत्र स्फुटो लक्ष्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥
तत्कुतूहलमेव मे जनितमस्यानया धैर्यवृत्त्या । (V. 54.)

गरुडः—(स्वगतं) आश्चर्यमाश्चर्यम् । कथमयमस्यामप्यवस्थायामूर्जितमेवाभिधत्ते । (प्रकाशं) अहो महासत्त्व ।

आवर्जितं मया चञ्च्वा हृदयात्तव शोणितम् ।
धैर्येणानेन च हृतं त्वया हृदयमेव मे ॥ (V. 56.)

3. He repented when he realised that, by mistake, he had almost killed Jimutavahana. He considered his sin to be beyond remedy. He determined to put an end to his life.

गरुडः—(स्वगतं) अये अयमसौ विद्याधरकुमारो जीमूतवाहनः । ......सर्वथा महत्यंहःपङ्के निमग्नोऽस्मि । (V. 64.)

गरुडः—...तन्महदकृत्यमेतन्मया कृतम् । किं बहुना । बोधिसत्त्व एवायं मया व्यापादितः । तदस्य महापातकस्याग्निप्रवेशादृते नान्यत्प्रायश्चित्तं पश्यामि । (V. 67.)

He was humbled and was ashamed to show his face to the parents of the hero and determined to fall into the submarine fire: but he was prevented by the hero.

गरुडः—...तत्सुव्यक्तमयमस्य पिता । तत्कृतमेतदीयेनाग्निना । न शक्नोम्यस्य पुत्रघातलज्जया मुखं दर्शयितुम् । (V. 73.)

He fell on his knees before the hero and humbly allowed himself to be advised by the hero, and vowed to act according to it.

गरुडः—(जानुभ्यां स्थित्वा शिरसि निहिताञ्जलिः) आज्ञापयतु भवान् । (V. 103.)
गरुडः—यदाज्ञापयति भवान् ।

अज्ञाननिद्रया सुप्तो भवता प्रतिबोधितः ।
सर्वप्राणिवधादेष विरतोऽद्यप्रभृत्यहम् ॥ (V. 105.)

He gave up eating serpents and promised to do penance for his past conduct. He even revived the dead serpents by a shower of ambrosia.

गरुडः—(सहर्षमात्मगतं) अये अमृतसंकीर्तनात्साधु स्मारितम्। मन्ये परिमृष्टमयशः। तद्यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनं यावदेतानपि पूर्वभक्षितानस्थिशेषानुरगपतीन्प्रत्युज्जीवयामि। (V. 122,)

He was so humbled that he even fanned the hero with his wings and revived him when he swooned.

गरुडः—सर्वमिदं मम नृशंसस्यासमीक्ष्यकारिताया विजृम्भितम्। तदेवं तावत्करोमि। (पक्षाभ्यां वीजयन्) भो महात्मन् समाश्वसिहि समाश्वसिहि (V. 87.)

## 6. THE HEROINE (MALAYAVATI)

I. The heroine was a charming and simple little maid practising penance to obtain the favour of Gauri. There is no doubt that she was very beautiful, for not only the hero but everybody else in the drama sings the chorus of her praise.

विदूषकः—आश्चर्यमाश्चर्यम् । न केवलं वीणाविज्ञानेनैव कर्णानां सुखं करोति। अनेन वीणाविज्ञानानुरूपेण रूपेणाप्यक्ष्णां सुखमुत्पादयति। (I. 37.)

तापसः—...(उभौ विलोक्य) चिरात्खलु युक्तकारी विधिः स्याद्यदि। युगलमेतदन्योन्यानुरूपं घटयेत्। (I. 59.)

चेटी—...यद्यहं चतुरिका तदा सोऽपि भर्तृदारिकामप्रेक्षमाणो न मुहूर्तमप्यन्यैरभिरंस्यते। (II. 16.)

वृद्धा—(सहर्षं मलयवतीमालिङ्ग्य) अविधवे धीरा भव। न खल्वीदृश्याकृतिरीदृशं वैधव्यदुःखमनुभवति। (V. 28.)

In the opinion of the hero, she was more beautiful than a celestial nymph.

स्वर्गस्त्री यदि तत्कृतार्थमभवच्चक्षुःसहस्रं हरे-
नांगी चेत्र रसातलं शशभृता शून्यं मुखेऽस्याः सति।

जातिर्नः सकलान्यजातिजयिनी विद्याधरी चेदियं

स्यात्सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः ॥ (I. 38.)

Her perfect form and the beauty of her limbs made ornaments redundant.

खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपर-

स्ताम्यत्यूरुयुगं नितम्बभरतः काञ्च्यानया किं पुनः ।

शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरौ

स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ॥ (III. 45.)

Her face was more beautiful than the moon; than the Nandana garden; than the lotus.

एतन्मुखं प्रियायाः शशिनं क्षिप्त्वा कपोलयोः कान्त्या ।
तापानुरक्तमधुना कमलं ध्रुवमीहते जेतुम् ॥ (III. 53.)
एतत्ते भ्रूलतोद्भासि पाटलाधरपल्लवम् ।
मुखं नन्दनमुद्यानमतोऽन्यत्केवलं वनम् ॥ (III. 54.)

2. She was very modest, and very bashful.

नायिका—(आत्मगतं) कथं लक्षितेवाहमेतया । तथापि पृच्छामि । (II. 11.)

नायिका—(चतुरिकाया अलकं स्पृशन्ती) हञ्जे चतुरिका खलु त्वम् । किं तेऽपरं प्रच्छाद्यते । तत्कथयिष्यामि । (II. 15.)

She was too shy to stay in the presence of Jimutavahana, although she loved him; but was sorry later that she could not see him to her heart's content.

नायिका—(अपवार्य) हञ्जे अतिसाध्वसेन न शक्नोम्येतस्य संमुखं स्थातुम् । (नायकं सलज्जं तिर्यक्पश्यन्ती किञ्चित्परावृत्तमुखी तिष्ठति.) (I. 51.)

नायिका—(निःश्वस्यात्मगतम्) अयि हृदय तथा नाम तस्मिन् जने लज्जया मां पराङ्मुखीकृत्य इदानीमात्मना तत्रैव गतोऽसीति अहो त आत्मंभरित्वम् । (II. 5.)

When she was in the company of the hero and his friend, she was afraid that some ascetic might see her and consider her conduct indecorous.

नायिका—(चेटिकामुद्दिश्य) अयि परिहासशीले मैवं कुरु। यदि कदापि कोऽपि तापसः प्रेक्षते ततो मामविनीतेति संभावयति। (I. 58.)

She was ashamed to appear before men in a love-sick condition.

नायिका—(ससंभ्रममात्मानं पश्यन्ती) हञ्जे मेदृशमाकारं प्रेक्ष्य कोऽपि मे हृदयं तुलयिष्यति। तदुत्तिष्ठ। अनेन रक्ताशोकपादपेनान्तरिते प्रेक्षावहे क एष इति। (II. 32.)

3. She was jealous of a rival and when she suspected that Jimutavahana's heart was fixed upon another she attempted to commit suicide.

नायिका—(आत्मगतं सास्रमात्मानं पश्यन्ती) किं ममैतेन दौर्भाग्यकलङ्कमलिनेनात्यन्तदुःखभागिनाद्यापि शरीरेण धारितेन। तदिहैवाशोकपादपेऽनयातिमुक्तलतयोद्बध्यात्मानं व्यापादयिष्यामि। (II. 77.)

But when she was convinced that she had no rival she loved him all the more; and when her marriage was settled shortly afterwards, her joy knew no bounds.

नायिका—(विहस्य) हञ्जे दुर्जनीकृतास्यनेन मां चित्रगतां दर्शयता। (II. 97.)

4. Even after the marriage she was too shy to speak to her husband or even look into his face. But all the same, she was proud of her lover and admired him for his gallantry.

नायिका—(अपवार्य) हञ्जे चतुरिके न केवलं दर्शनीयः प्रियमपि भणितुं जानाति। (III. 41.)

When the Cheti blackened the face of the Vidushaka, she just smiled; and a little later, when being left alone,

the hero expressed his desire to have a kiss, she smiled and turned her face away.

नायकः—(नायिकाया मुखं पश्यन्)

दिनकरकरामृष्टं विभ्रद्द्युतिं परिपाटलां
दशनकिरणैः संसर्पद्भिः स्फुटीकृतकेसरम् ।
अयि मुखमिदं मुग्धे समं कमलेन ते
मधु मधुकरः किं वै तस्मिन्पिबन्न विभाव्यते ॥ (III. 66)

The heroine is thus a charming young girl; but she is a poor specimen of a heroine and she cuts a poor figure in the pathetic scene in which her husband is in danger, where she finds herself completely out of her element. She does not know what to say and simply echoes, sometimes inappropriately, the words of her father-in-law or mother-in-law, and swoons when they swoon although she is the last to revive.

5. When she heard of the death of her husband, her words were pathetically simple.

नायिका—(समाश्वस्य) हा आर्यपुत्र क्वेदानीं मया त्वं प्रेक्षितव्यः । (V. 41.)
नायिका—(पादयोर्निपत्य कृताञ्जलिः) तात देहि मे आर्यपुत्रस्याङ्काभरणचिह्नं चूडारत्नं येनैतद्हृदये कृत्वा ज्वलनप्रवेशेनापनयाम्यात्मनः सन्तापदुःखम् । (V. 45.)

She could not believe her eyes when she saw her husband alive; for she felt she was too unfortunate for such a miracle.

Her grief was sincere though subdued: her ascetic and dutiful nature could not give rise to passionate expression, especially in the presence of revered elders.

नायिका—यत्सत्यमार्यपुत्रं प्रेक्षमाणाया अपि झटित्यप्रियमिति कृत्वा न प्रत्येति मे हृदयम् । (V. 80.)

नायिका—हा आर्यपुत्र अतिदुःखभागिनी खल्वहं येदृशमार्यपुत्रं प्रेक्षमाणाद्यापि जीवितं न परित्यजामि ! (V. 96.)

नायिका—हा आर्यपुत्र मां परित्यज्य गमनं ते न युक्तम् । (V. 112.)

नायिका—हा आर्यपुत्र, कथं मां परित्यज्य गतोऽसि । अयि निर्घृण हृदये वज्र-कठिनदेहे मलयवति प्राणनाथं विना कथमद्यापि जीवसि ! ( V.118.)

नायिका—(बद्धाञ्जलिरूर्ध्वं पश्यन्ती) भगवति गौरि त्वयाज्ञप्तं यथा विद्याधर-चक्रवर्ती भर्ता ते भविष्यतीति । तत्कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता । (V. 127.)

Yes it cannot be gainsaid that the heroine's character falls rather below one's expectations. She is not a वीरपत्नी and the author might safely have omitted her in the last act. She is only a link between the earlier and latter parts of the drama. In the earlier acts, she is passable as a heroine of the *mugdha* type.

## 7. The Cheti (Chaturika.)

1. Chaturika was, as her name indicated, a clever woman. She scented the cause of the alleged indisposition of the heroine and made fun of her by ambiguously presenting to her the desire of her heart.

चेटी—एष ते हृदयस्थितो वरः (II. 12.)

By her shrewdness she guessed that the hero also would be in a similar love-sick state.

चेटी—...यद्यहं चतुरिका तदा सोऽपि भर्तृदारिकामप्रेक्षमाणो न मुहूर्तमप्यन्यै-रभिरंस्यते । एतदपि मया लक्षितमेव । (II. 16.)

चेटी—(हस्ते गृहीत्वा) भर्तृदारिके मैवं भण । येन त्वं दृष्टा सोऽन्यत्र्रणिष्य-
तीति न हि मे हृदये प्रत्येति । (II. 49.)

When the hero was talking of his beloved to the Vidushaka, she at once inferred that it was the heroine about whom he was talking.

चेटी—भर्तृदारिके यथावामपवारिते एनं प्रेक्षावहे मा नाम त्वमप्येवं दृष्टा ।
(II. 43.)

In his eagerness to depict her as very clever, the author, has made her infer future events even without sufficient grounds for so doing. Thus, she suspected that the heroine would commit suicide not only when there was no sufficient reason :—

चेटी—(कतिचित्पदानि गत्वावलोक्य स्वगतं) अन्यादृशमस्या हृदयं प्रेक्षे ।
न तावदग्रे गमिष्यामि । इहैवापवारिता प्रेक्षे किमेषा प्रतिपद्यत
इति । (II. 78.)

but also when there was not the least indication of such an intention in the heroine's mind :—

चेटी—(सविषादमात्मगतं) कथं जीवितनिरपेक्ष इवास्या आलापः । (II. 55.)

2. She was also a practical woman. She dissuaded the heroine from undergoing ths troubles of penance unsuited to a maiden, before an unkind Goddess.

चेटी—भर्तृदारिके ननु भणामि किमेतस्या निष्करुणायाः पुरतो वीणावादितेन ।।
येतावन्तं कालं कन्यकाजनदुष्करैर्नियमोपवासैराराधयन्त्या न ते
प्रसादं दर्शयति । (I. 34.)

चेटी—(सप्रणयं) भर्तृदारिके ननु भणामि किमिदानीमेतस्य अकृताह्लादाया
निष्करुणाया देव्याः पुरतो वादितेन । (इति वीणामाक्षिपति)
(I. 40.)

When the hero entered the temple in which the heroine was singing, she guessed from his appearance that he would espouse her; and seeing that the heroine's eye was fixed on him, she welcomed him and offered him a seat.

चेटी—(नायकं निरूप्यापवार्य) एतयानन्यसदृशयाकृत्यैव स भगवत्या गौर्याः प्रसाद इति तर्कयामि । (I. 49.)

चेटी—(नायकमवलोक्य स्वगतं) अनुरज्यत इवात्रैतस्या दृष्टिः। भवत्वेवं तावद्भणिष्यामि (प्रकाशम्) भर्तृदारिके युक्तं भणति ब्राह्मणः। उचितः खलु तेऽतिथिजनसत्कारः । तत्किमेतस्मिन्महानुभाव एवं प्रतिपत्तिमूढा तिष्ठसि। अथवा तिष्ठ त्वम्। अहमेव यथानुरूपं करिष्यामि। (नायकमुद्दिश्य) स्वागतं महाभागस्य । आसनपरिग्रहेणालंकरोत्विमं प्रदेशमार्यः। (I. 55.)

3. She sincerely loved the heroine. She sympathised with her and consoled her when she was in distress.

चेटी—भर्तृदारिके मा रुदिहि । अथवा कथं न रोदिष्यति। अतिशयमस्या हृदयसन्तापो बाधते। तत्किमिदानीमत्र करिष्यामि । तथावच्चन्दनलतापल्लवरसमस्या हृदये दास्यामि । (II. 20.)

She did not leave the heroine when she suspected she would commit suicide, but watched her from a distance.

चेटी—(कतिचित्पदानि गत्वावलोक्य स्वगतम्) अन्यादृशमस्या हृदयं प्रेक्षे। न तावदग्रे गमिष्यामि । इहैवापवारिता प्रेक्षे किमेषा प्रतिपद्यत इति। (II. 78.)

But after all she was a woman and so, when in danger, she cried for help like any other woman.

चेटी—(दृष्ट्वा ससंभ्रममुपसृत्य) परित्रायध्वं परित्रायध्वम् । एषा भर्तृदारिको-
द्बध्यात्मानं व्यापादयति । (II. 80.)

4. In the *tamala* avenue, she made fun of the Vidushaka by smearing his face with the dark juice of the leaves. When he left the scene in feigned anger, she caught the hint and left the place under the pretext of pacifying him.

चेटी—सत्यं खलु कुपितो मे आर्य आत्रेयः । यावदनुगम्य प्रसादयिष्यामि ।
(गन्तुमिच्छति) (III. 63.)

When the heroine asked her not go away, leaving her alone, she humourously remarks:

चेटी—(नायकमुद्दिश्य सस्मितं) एवमेकाकिनी चिरं भव। (इति निष्क्रान्ता)
(III. 65)

But she was on her guard and intimated to the hero and heroine the arrival of Mitravasu.

चेटी—(प्रविश्य पटाक्षेपेण सहसोपसृत्य) एष खल्वार्यमित्रावसुः कार्येण केनापि
कुमारकं प्रेक्षितुमागतः (III. 67.)

## 8. 9. The Parents Of The Hero.

Jimutaketu was a model ruler of his days. He enjoyed the pleasures of youth to his satisfaction, and acquired fame by ruling the country with credit; towards the end of his life, he went out to practise penance in a hermitage. His son surpassed him in merits and his daughter-in-law came of an equally noble family. He was completely satisfied with his life and was quite ready to face death.

भुक्तानि यौवनसुखानि यशो विकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि ।
श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः ॥ (V. 2.)

He chose a place which abounded in the natural food needed by hermits, He was an *ahitagni*, i. e,, he never let the holy fire go out, and performed the *Homas* regularly.

नायकः—...आज्ञप्तश्चास्मि तातेन । यथा वत्स जीमूतवाहन ! बहुदिवसपरिभोगदूरीकृतसमित्कुशकुसुममुपभुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्तते । तदितो मलयपर्वतं गत्वा तस्मिन्निवासयोग्यं किञ्चिदाश्रमपदं निरूपयेति । (I. 15.)

His wants were carefully attended to by his son, the hero, whose only object in giving up his kingdom was to be able to serve his parents well.

His love for his son was so great that he did not want to live a minute after he heard of his death ; but being an *ahitagni*, he cold not use any other fire to burn his body except that maintained by him in his house. He is, therefore, prevented from dying at once.

जीमूतकेतुः—(सास्रं) देवि वयं किं जीमूतवाहनेन विनापि जीवामो येनैवं प्रलपसि । (V. 44.)

जीमूतकेतुः—देवि न किंचित् किन्त्वाहिताग्नेर्नान्येनाग्निना संस्कारो विहितः । अतोऽग्निहोत्रशरणादग्नीनादायात्मानमुद्दीपयामः । (V. 48.)

As a man, and as a Kshatriya, he could naturally restrain his feelings better than his queen, the old lady,

who, as a mother, could only abuse Garuda for his cruelty towards her son.

वृद्धा—(साश्रं [illegible] गरुडमुद्दिश्य) हा नृशंस कथमिदानीं त्वये- [illegible] मेवैतदवस्थं पुत्रकस्य मे शरीरं कृतम्? (V. [illegible])

She too loved her son very dearly.

वृद्धा—(सहर्षं) महाराज कृतार्थासि । अक्षतशरीरस्य पुत्रकस्य मुखं प्रेक्षिष्ये । (V. [illegible])

When the hero advised Sankhachuda to return home and console *his* mother, she cried that *she* was not so fortunate as the other mother.

वृद्धा—(सास्रं) धन्या खलु सा जननी, या गरुडमुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते । (V. 107.)

She was the first to recognise the crest jewel to be her son's

वृद्धा—(सविषादं) महाराज पुत्रकस्यैवैतच्चूडारत्नम् । (V. 16.)

She was the first to make up her mind to die when all of them heard of the death of the hero.

वृद्धा—([illegible]) [illegible] । मा रुदिहि । वयमपि किं जीमूतवाहनेन विना जीवामः । [illegible] । (V. 40.)

वृद्धा—[illegible] । (V. 47.)

But, as a mother, she hoped against hope that her son might be alive.

वृद्धा—[illegible] । [illegible] । [illegible] । (V. 20.)

And when the hero died, it was her unconscious mention of the word *amrita* that reminded Garuda of the means by which he promised to revive the hero and the dead serpents.

वृद्धा—(सास्रमूर्ध्वमवलोक्य) भगवन्तो लोकपालाः । कथं नामृतेन सिक्त्वेमं मे पुत्रकं जीवयथ । (V. 121.)

the old lady is more true to life and attracts us more by the realistic touches in her character than the heroine,

### 10. 11. THE VITA (SEKHARAKA) AND THE CHETI (NAVAMALIKA).

Sekharaka was a sensualist and a drunkard; and in his drunken state mistook the veiled Vidushaka for his love and tried tn embrace him. He waa a puppet in the hands of the maid Navamalika, and tried to make the Vidushaka drink wine or let him go, as she pleased. He is a poor imitation of the Sakara in the *Mrricchakatika*.

Navamalika knew well the weakness of the Vita and used him as a tool in taking revenge on the Vidushaka, though in jest. The Vidushaka appealed to her help when he was caught by the drunken Vita and she promised to releive him if he fell at her feet. When he refused to do so alleging his high birth, she placed him in such a predicament that he had either to drink win or fall at her feet. As the lesser of the two evils, the Vidushaka preferred the latter. but the Cheti let him off. Although she loved the Vita and was anxious to meet him, she is not unmindful of her duty towards her mistress.

## THE OTHER CHARACTERS

These are :—

(12) Vasubhadra, the old Chamberlain of Visvavasu, who brought the red cloths to Jimutavahana, when he needed them for his noble purpose.

(13) Sunanda, the door-keeper of Visvavasu.

(14) Cheta, the Servent of Sekharaka.

(15) The Servant of Vasuki, the Serpent king.

(16) Sandilya, the *Tapasa*, who recognized, in Jimutavahana, the future Emperor of the Vidyadaras; yet he was human enough to wish that the hero and the heroine may become husband and wife.

(17) Sankhachuda's mother who, like the mother of the hero, is another embodiment of motherly love.

(18) Manoharika, another Cheti.

(19) Gawri, who appeared at the end of the play to conclude it in a happy manner, She revived the hero and crowned him Emperor of the Vidyadaras with the holy waters created by herself and thus redeemed her pledge to the heroine.

## ॥ नाटकपात्राणि ॥

(पुरुषाः)

१. जीमूतकेतुः—विद्याधरराजः. (Act V.)

२. जीमूतवाहनः—(नायकः) जीमूतकेतोस्तनयः—(Acts I—V)

३. मित्रावसुः—सिद्धराजविश्वावसोस्तनयः. (Acts II—IV)

४. शाण्डिल्यः—(तापसः) सिद्धराजपुरोधसः कौशिकस्य शिष्यः—(Act I)

५. गरुडः—नागशत्रुः पक्षिराजः. (Acts IV, V)

६. शङ्खचूडः—गरुडस्याहारार्थं वासुकिना प्रेषितो नागः (Acts VI, V)

७. आत्रेयः—(विदूषकः) नायकस्य प्रियवयस्यः—(Acts I—III)

८. शेखरकः—(विटः) सिद्धराजपरिजनेष्वेकः—(Act III)

९. चेटः—शेखरकस्य भृत्यः. (Act III)

१०. किङ्करः—नागराजभटः. (Act IV)

११. वसुभद्रः—(कञ्चुकी) मित्रावसोः. (Act IV)

१२. सुनन्दः—(प्रतीहारः) मित्रावसोः. (Act V)

(स्त्रियः)

१. गौरी—भगवती शर्वाणी. (Act V)

२. कनकवती—(वृद्धा) जीमूतकेतोः पत्नी—(Act IV)

३. मलयवती—(नायिका) विश्वावसोः पुत्री—(Acts I—III, V)

४. चतुरिका (Acts I, III)
५. मनोहरिका (Act II)
६. नवमालिका (Act III)
} —मलयवत्याश्चेट्यः

७. वृद्धा—शङ्खचूडस्य जननी. (Act IV)

प्रचारकः ।

मलयाचलप्रान्ताः ।

॥ श्रीः ॥

# ॥ नागानन्दम् ॥



## ॥ प्रस्तावना ॥

१. ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ १

अपि च—

कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरै-
र्भ्रूभङ्गोत्कम्पजृम्भास्मितललितदृशा दिव्यनारीजनेन ।
सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन
ध्यायन्यो योगपीठादचलित इति वः पातु दृष्टो मुनीन्द्रः ॥

(नान्द्यन्ते)

२. सूत्रधारः—अलमतिविस्तरेण । अद्याहमिन्द्रोत्सवे सबहुमानमाकार्य नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः यथा—'अस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालङ्कृतं विद्याधरजातकप्रतिबद्धं नागानन्दं नाम नाटकं कृतमित्यस्माभिः श्रोत्रपरम्परया श्रुतं न तु प्रयो-

---

१. शार्दूलविक्रीडितम्. २. स्रग्धरा.

गतो दृष्टम् । तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहु-
मानादस्मासु चानुग्रहबुद्ध्या यथावत्प्रयोगेण त्वया नाटयि-
तव्यम्'—इति । तद्यावदिदानीं नेपथ्यरचनां कृत्वा यथा-
भिलषितं संपादयामि । (परिक्रम्यावलोक्य च) आवर्जि-
तानि च सकलसामाजिकानां मनांसीति मे निश्चयः । यतः—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च सिद्धराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ३

तद्यावदहं गृहं गत्वा गृहिणीमाहूय संगीतकमनुतिष्ठामि ।
(परिक्रम्य नेपथ्याभिमुखमवलोक्य च) इदमस्मद्गृहम् याव-
त्प्रविशामि । (प्रविश्य) आर्ये इतस्तावत् ।

(प्रविश्य)

३. नटी—(सास्रम्) अज्ज इयं ह्मि मन्दभग्गा आणवेदु अज्जउत्तो
को णिओओ अणुचिठ्ठीअदु त्ति ।

४. सूत्र—(विलोक्य) आर्ये ! नागानन्दे नाटयितव्ये किमिदम-
कारणमेव रुद्यते ।

---

३. आर्ये इयमस्मि मन्दभाग्या आज्ञापयत्वार्यपुत्रः को नियोगोऽनु-
ष्ठीयतामिति ।

---

३. शार्दूलविक्रीडितम्.

५. नटी—अज्ज कहं ण रोदिस्सं जदो दाव तादो अज्जाए सह थविरभावजादणिव्वेदो कुडुम्बभारुव्वहणजोग्गो द्राणिं तुम त्ति आरोविअ हिअए तवोवणं गदो ।

६. सूत्र—(सनिर्वेदम्) अये कथं मां परित्यज्य तपोवनं यातौ पितरौ तत्किमिदानीं युज्यते कर्तुम् (विचिन्त्य) अथवा कथमहं गुरुचरणपरिचर्यासुखं परित्यज्य गृहे तिष्ठामि ।

पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्यं क्रमागतम् ।
वनं याम्यहमप्येष यथा जीमूतवाहनः ॥ ४

(इति निष्क्रान्तौ)

प्रस्तावना ॥

---

## ॥ प्रथमोऽङ्कः ॥

(ततः प्रविशति नायको विदूषकश्च)

७. नायकः—(सनिर्वेदम्) सखे आत्रेय !

रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ ।
एवं निन्द्यमपीदमिन्द्रियवशं प्रीत्यै भवेद्यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥ ५

---

५. आर्ये कथं न रोदिष्यामि यतस्तावत्तात आर्यया सह स्थविरभावजातनिर्वेदः कुटुम्बभारोद्वहनयोग्य इदानीं त्वमित्यारोप्य हृदये तपोवनं गतः ।

---

४. श्लोकः ५. शार्दूलविक्रीडितम्.

८. विदूषकः—(सरोषम्) भो वअस्स णं णिव्विण्णो एव्व तुमं एत्तिअं कालं एदाणंजीवन्तमुआणं कदे इमं ईदिसं वणवास-दुक्खं अणुहवन्तो । ता पसीद दाणिंपि दाव गुरुचलणसुस्सूसानिब्बन्धादो निअत्तिअ इच्छाभोअरमणीअं रज्जसुहं अणुहवीअदु ।

९. नाय—वयस्य न सम्यगभिहितं त्वया । कुतः—

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा
यत्संवाहयतः सुखं तु चरणौ तातस्य किं राजके ।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तेऽज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुणः ॥ ६

१०. विदू—(आत्मगतम्) अहो एदस्स गुरुचलणसुस्सूसाणुराओ । (विचिन्त्य) भोदु ता एदंपि दाव भणिस्सं । (प्रकाशम्) भो वअस्स ण क्खु अहं रज्जसुहं एव्व केवलं उद्दिसिअ एव्वं भणामि अण्णंपि दाव करणीअं अत्थि एव्व ।

---

८. भो वयस्य ननु निर्विण्ण एव त्वमेतावन्तं कालमेतयोर्जीवन्मृतयोः कृते इदमीदृशं वनवासदुःखमनुभवन् । तत्प्रसीद इदानीमपि तावद्गुरुचरणशुश्रूषानिर्बन्धान्निवृत्य इच्छाभोगरमणीयं राज्य-सुखमनुभूयताम् ।

१०. अहो एतस्य गुरुचरणशुश्रूषानुरागः भवतु तदेतदपि तावद्भणिष्यामि । भो वयस्य न खल्वहं राज्यसुखमेव केवलमुद्दिश्यैवं भणामि अन्यदपि तावत्करणीयमस्त्येव ।

---

६. शार्दूलविक्रीडितम्

११. नाय—(सस्मितम्) वयस्य! ननु कृतमेव यत्करणीयम्। पश्य तावत्—

न्याय्ये वर्त्मनि योजिताः प्रकृतयः सन्तः सुसंस्थापिता
नीतो बन्धुजनस्तथात्मसमतां राज्ये च रक्षा कृता ।
दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने
किं कर्तव्यमतः परं वद सखे यत्ते स्थितं चेतसि ॥ ७

१२. विदू—भो वअस्स अच्चन्तसाहसिओ मदङ्गहदओ दे पडिवक्खो । तस्सिं च समासण्णट्ठिदे पहाणामच्चसमधिट्ठिदंपि तुए विणा रज्जं सुट्ठिदं त्ति ण मे पडिहादि ।

१३. नाय—धिङ्मूर्ख! किं मतङ्गो राज्यं हरिष्यतीति शङ्कसे ?

१४. विदू—अध इं ।

१५. नाय—यद्येवं ततः किम् । ननु स्वशरीरतः प्रभृति परार्थमेव सर्वं मया परिकल्प्यते। यच्च स्वयं न दीयते तत्तातानुरोधात् । तत्किमनेन राज्यवस्तुना चिन्तितेन। वरं ताताज्ञैवानुष्ठिता। आज्ञप्तश्चास्मि तातेन यथा—'वत्स जीमूतवाहन! बहुदिवसपरिभोगदूरीकृतसमित्कुशकुसुममुपभुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्तते । तदितो मलयपर्वतं गत्वा तस्मि-

---

१२. भो वयस्य अत्यन्तसाहसिको मतङ्गहतकस्ते प्रतिपक्षः। तस्मिंश्च समासन्नस्थिते प्रधानामात्यसमधिष्ठितमपि त्वया विना राज्यं सुस्थितमिति न मे प्रतिभाति ।

१४. अथ किम् ।

---

७. शार्दूलविक्रीडितम्.

न्निवासयोग्यं किञ्चिदाश्रमपदं निरूपये'—इति । तदेहि मलयपर्वतमेव गच्छावः ।

१६. विदू—जंभवं आणवेदि ।

(इत्युभौ परिक्रामतः)

विदू—(अग्रतोऽवलोक्य) भो वअस्स एसो क्खु सरसघणचन्दणवणुस्सङ्गपरिमिलणलग्गबहलपरिमलो विसमतडोपहदजज्जरिदणिज्झरुच्छलिदसिसिरसीअरासारवाही पढमसङ्गमुक्कण्ठिअपिआकण्ठग्गहो विअ मग्गपरिस्समं अवणअन्तो रोमञ्चेदि पिअवअस्सं मलअमारुओ ।

१७. नाय—(निरूप्य सविस्मयम्) अये प्राप्ता एव वयं मलयपर्वतम् । (समन्तादवलोक्य) अहो रामणीयकमस्य मलयाचलस्य—तथा हि—

माद्यत्कुञ्जरगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः ।
पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतै-
र्दृष्टोऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ।

तदेह्यत्रारुह्य निवासयोग्यं किञ्चिदाश्रमपदं निरूपयावः ।

---

१६. यद्भवानाज्ञापयति ।

भो वयस्य ! एष खलु सरसघनचन्दनवनोत्सङ्गपरिमिलनलग्नबहुलपरिमलो विषमतटोपहतजर्जरितनिर्झरोच्छलितशिशिरशीकरासारवाही प्रथमसङ्गमोत्कण्ठितप्रियाकण्ठग्रह इव मार्गपरिश्रममपनयन् रोमाञ्चयति प्रियवयस्यं मलयमारुतः ।

---

८. शार्दूलविक्रीडितम्.

१८. विदू—एवं करोह्म । (अग्रतः स्थित्वा) एदु भवं ।

(आरोहणं नाटयतः)

१९. नाय—(दक्षिणाक्षिस्पन्दनं सूचयित्वा विमृश्य) सखे !

दक्षिणं स्पन्दते चक्षुः फलाकाङ्क्षा न मे क्वचित् ।
न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम् ॥ ९

२०. विदू—भो वअस्स आसण्णं ते पिअं णिवेदेदि ।

२१. नाय—एवं नाम यथाह भवान् ।

२२. विदू—(विलोक्य)भो वअस्स पेक्ख पेक्ख एदं क्खु सविसेसघणसिणिद्धपाअवविसोहिअं सुरहिहविगन्धगब्भिदुद्दामधूमणिग्गमं अणुव्विग्गसुहनिसण्णसावअगणं तवोवणं विअ लक्खीअदि ।

२३. नाय—सम्यगुपलक्षितम् तपोवनमेवैतत् । तथा हि—

वासोर्थं दययेव नातिपृथवः कृत्तास्तरूणां त्वचो
भग्नानेकजरत्कमण्डलु नभः स्वच्छं पयो नैर्झरम् ।
दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्यः क्वचिन्मेखला-
नित्याकर्णनया शुकेन च पदं साम्नामिदं पठ्यते ॥ १०

---

१८. एवं कुर्वः । एतु भवान् ।

२०. भो वयस्य आसन्नं ते प्रियं निवेदयति ।

२२. भो वयस्य! प्रेक्षस्व प्रेक्षस्व एतत्खलु सविशेषघनस्निग्धपादपविशोभितं सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गममनुद्विग्नसुखनिषण्णशावकगणं तपोवनमिव लक्ष्यते ।

---

९. श्लोकः. १०. शार्दूलविक्रीडितम्.

तदेहि प्रविश्य विलोकयावः ।

(प्रवेशं नाटयतः)

नाय—(सविस्मयं विलोक्य) अहो नु खलु मुदितमुनिजन-प्रविचार्यमाणसन्दिग्धवेदवाक्यविस्तरस्य पठद्वटुवटुजन - च्छिद्यमानाद्रार्द्रसमिधस्तापसकुमारिकापूर्यमाणबालवृक्षाल - वालस्य प्रशान्तरमणीयता तपोवनस्य । इह हि—

मधुरमिव वदन्ति स्वागतं भृङ्गनादै-
नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः ।
मम ददत इवार्घ्यं पुष्पवृष्टिं किरन्तः
कथमतिथिसपर्यां शिक्षिताश्शाखिनोऽपि ॥ ११

तन्निवासयोग्यमिदं तपोवनं । मन्ये भविष्यतीह वसता-मस्माकं परा निर्वृतिः ।

२४. विदू—(इतस्ततो विलोक्य) भो वअस्स किं क्खु एदे इसिवलिअकन्धरा निच्चलमुहनिस्सरन्तदरदलिअदब्भकवला समुण्णमिदादिण्णेक्ककण्णा सुहसंमीलिदलोअणा आअण्णंता विअ हरिणा लक्खीअन्दि ।

२५. नाय—(कर्णं दत्वा) ! सम्यगुपलक्षितम् । तथा हि—

---

२४. भो वयस्य किं खल्वेते ईषद्वलितकन्धरा निश्चलमुखनिःसरद्दर-दलितदर्भकबलाः समुन्नमितदत्तैककर्णाः सुखसंमीलितलो-चना आकर्णयन्त इव हरिणा लक्ष्यन्ते ।

---

११. मालिनी.

स्थानप्राप्त्या दधानं प्रकटितगमकं मन्द्रतारव्यवस्था
निर्ह्रादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वनेन ।
एते दन्तान्तरालस्थिततृणकबलच्छेदशब्दं नियम्य
व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति ॥

२६. विदू—भो वअस्स को उण एसो तवोवणे गाअदि ।

२७. नाय—यथैताः कोमलाङ्गुलितलाभिहन्यमाना नातिस्फुटं क्वणन्ति तन्त्र्यः तथा काकलीप्रधानं गीयत इति तर्कयामि । (अङ्गुल्यग्रेणाग्रतो निर्दिशन्) अस्मिन् देवतायतने देवतामाराधयन्ती काचिद्दिव्ययोषिदुपवीणयति ।

२८. विदू—भो वअस्स एहि अह्मे वि एदं देवदाअदणं पेक्खम्ह ।

२९. नाय—साधूक्तं भवता । वन्द्याः खलु देवताः । (उपसर्पन्सहसा स्थित्वा) वयस्य ! कदाचिद्दृष्टुमनर्होऽयं स्त्रीजनो भविष्यति । तदनेन तावत्तमालगुल्मकेनान्तरितौ देवतादर्शनावसरं प्रतिपालयावः । (तथा कुरुतः)

ततः प्रविशति भूमावुपविष्टा वीणां वादयन्तीमलयवतीचेटीच)

३०. नायिका—(संस्कृतमाश्रित्य गायति)

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥ १३

---

२६. भो वयस्य ! कः पुनरेष तपोवने गायति ।

२८. भो वयस्य ! एह्यावामप्येतद्देवतायतनं प्रेक्षावहे ।

---

१२. स्रग्धरा. १३. आर्या.

३१. नाय—( गीतमाकर्ण्य ) वयस्य अहो गीतमहो वादितम् ।
तथा हि—

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधायं लयः ।
गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि संपादिता-
स्तत्त्वौघानुगताश्च वाद्यविधयः सम्यक्त्रयो दर्शिताः ॥ १४

३२. चेटी—( सप्रणयम् ) भट्टिदारिए चिरं क्खु तुए वादिदं । ण क्खु दे पडिस्समो अग्गहत्थाणं ।

३३. नायि—(साधिक्षेपम्) हञ्जे चदुरिए गौरिए पुरदो वीणं वाद अन्तीए कुदो मे पडिस्समो अग्गहत्थाणं ।

३४. चेटी—भट्टिदारिए णं भणामि–किं एदाए णिक्करुणाए पुरदो वीणावादिदेण जा एत्तिअं कालं कण्णकाजणदुक्करेहिं णिअमोववासेहिं आराधअन्तीए ण दे पसाअं दंसेदि ।

---

३२. भर्तृदारिके! चिरं खलु त्वया वादितम् । न खलु ते परिश्रमोऽग्रहस्तानाम् ।

३३. हञ्जे चतुरिके ! गौर्याः पुरतो वीणां वादयन्त्याः कुतो मे परिश्रमोऽग्रहस्तानाम् ।

३४. भर्तृदारिके! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वीणावादितेन यैतावन्तं कालं कन्यकाजनदुष्करैर्नियमोपवासैराराधयन्त्या न ते प्रसादं दर्शयति ।

---

१४. शार्दूलविक्रीडितम्.

३५. विदू—भो वअस्स कण्णआ क्खु एसा। ता किं ण पेक्खम्ह
३६. नाय—को दोषः? कन्यका हि निर्दोषदर्शना भवन्ति। किन्
कदाचिदस्मान् दृष्ट्वा बालभावसुलभलज्जासाध्वसान्न चिर
मिह तिष्ठेत्। तदनेनैव तमालान्तरेण पश्यावः।

(उभौ तथा पश्यतः)

३७. विदू—(विलोक्य सविस्मयम्) भो वअस्स पेक्ख पेक्ख अच्च
रिअं अच्चरिअं। ण केवलं वीणाविण्णाणेण एव्व कण्णाणं सु
करेदि इमिणा वीणाविण्णाणुरूवेण रूवेण वि अच्छीणं सु
उप्पादेदि। का उण एसा भविस्सदि—किं दाव देवी अह
णाअकण्णआ आदो विज्जाहरदारिआ उत सिद्धकुलसंभवेत्ति

३८. नाय—(सस्पृहमवलोकयन्) वयस्य! केयमिति नावगच्छामि
एतत्पुनरहं जानामि—

स्वर्गस्त्री यदि तत्कृतार्थमभवच्चक्षुःसहस्रं हरे-
र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः सति।
जातिर्नः सकलान्यजातिजयिनी विद्याधरी चेदियं
स्यात्सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः॥

३५. भो वयस्य! कन्यका खल्वेषा। तत् किं न प्रेक्षावहे।

३७. भो वयस्य! प्रेक्षस्व प्रेक्षस्व आश्चर्यमाश्चर्यम् न केवलं वीणावि-
ज्ञानेनैव कर्णानां सुखंकरोति अनेन वीणाविज्ञानानुरूपेण
रूपेणाप्यक्ष्णां सुखमुत्पादयति—किं तावद्देवी? अथवा नाग-
कन्यका? आहो विद्याधरदारिका? उत सिद्धकुलसंभवे?ति

---

१५. शार्दूलविक्रीडितम्.

३९. विदू—(नायकमवलोक्य सहर्षमात्मगतम्) दिट्ठिआ चिरस्स-दाव कालस्स पडिदो क्खु एसो गोअरे मम्महस्स। (आत्मानं निर्दिश्य भोजनमभिनीय) अहवा णहि णहि मम एव्व एकस्स बह्मणस्स।

४०. चेटी—(सप्रणयम्) भट्टिदारिए णं भणामि—किं दाणिं एदाए अकिदाह्लादाए णिक्करुणाए देवीए पुरदो वाइदेण। (इति वीणामाक्षिपति)

४१. नायि—(सकोपम्) हञ्जे मा भअवदिं गोरिं अधिक्खिव। णं अज्ज किदो मे भअवदीए पसाओ।

४२. चेटी—(सहर्षम्) भट्टिदारिए कहेहि दाव केरिसो सो?

४३. नायि—हञ्जे जाणामि अज्ज सिविणए एदं एव्व वीणं वादअन्ती भअवदीए गोरीए भणिदह्मि—'वच्छे परितुट्ठह्मि दे एदिणा वीणाविण्णाणादिसएण इमाए च अबलाजणदुक्कराए

---

३९. दिष्ट्या चिरस्य तावत्कालस्य पतितः खल्वेष गोचरे मन्मथस्य। अथवा नहि नहि ममैवैकस्य ब्राह्मणस्य।

४०. भर्तृदारिके! ननु भणामि—किमिदानीमेतस्या अकृताह्लादाया निष्करुणाया देव्याः पुरतो वादितेन।

४१. हञ्जे! मा भगवतीं गौरीमधिक्षिप। नन्वद्य कृतो मे भगवत्या प्रसादः।

४२. भर्तृदारिके! कथय तावत्कीदृशः सः?

४३. हञ्जे! जानामि अद्य स्वप्न एतामेव वीणां वादयन्ती भगवत्या गौर्या भणितास्मि—'वत्से! परितुष्टास्मि ते एतेन वीणाविज्ञा-

असाहारणाए मज्झोवरि भत्तीए । ता विज्जाहरचक्क-
वत्ती दे अइरेण एव्व पाणिग्गहणं णिव्वत्तइस्सदि त्ति ।

४४. चेटी—(सहर्षम्) भट्टिदारिए जइ एव्वं ता कीस सिविणओ त्ति भणसि । णं हिअअट्ठिदो वरो एव्व भअवदीए देवीए दिण्णो ।

४५. विदू—भो वअस्स अवसरो क्खु अह्माणं देवीदंसणस्स । ता एहि उवसप्पह्म ।

४६. नाय—न तावत्प्रविशामि ।

(विदू—अनिच्छन्तमपि नायकं बलादाकर्षति )

(उभौ देवालयं प्रविशतः)

४७. विदू—(उपसृत्य) सोत्थि भोदिए। भोदि सच्चकं एव्व चदुरिआ भणादि । वरो इदो एव्व दे एसो देवीए दिण्णो ।

४८. नायि—(ससाध्वसमुत्तिष्ठन्ती नायकमुद्दिश्यापवार्य) हञ्जे को णु क्खु एसो ।

---

नातिशयेन अनया च अबलाजनदुष्करया असाधारणया ममोपरिभक्त्या । तस्माद्विद्याधरचक्रवर्ती तेऽचिरेणैव पाणि-ग्रहणं निर्वर्तयिष्यति' इति ।

४४. भर्तृदारिके! यद्येवं तत्कस्मात्स्वप्न इति भणसि । ननु हृदयास्थितो वर एव भगवत्या देव्या दत्तः ।

४५. भो वयस्य! अवसरः खल्वावयोर्देवीदर्शनस्य । तदेह्युपसर्पावः ।

४७. स्वस्ति भवत्यै । भवति ! सत्यमेव चतुरिका भणति । वर इत एव ते एष देव्या दत्तः ।

४८. हञ्जे ! को नु खल्वेषः ।

४९. चेटी—(नायकं निरूप्यापवार्य) एदाए अणण्णसदिसाए आकिदीए एसो सो भअवदीए गोरीए पसादोत्ति तक्केमि ।

(नायिका सलज्जं सस्पृहं च नायकमवलोकयति)

५०. नाय—तनुरियं तरलायतलोचने
श्वसितकम्पितपीनघनस्तनि ।
श्रममलं तपसैव गता पुनः
किमिति संभ्रमधारिणि खिद्यते ॥ १६

५१. नायि—(अपवार्य) हञ्जे अदिसद्धसेण ण सक्कुणोमि एदस्स सम्मुहं ठादुं । (नायकं सलज्जं तिर्यक्पश्यन्ती किञ्चित्परावृत्तमुखी तिष्ठति)

५२. चेटी—भट्टिदारिए किं एदं ।

५३. नायि—हञ्जे न सक्कुणोमि एदस्स अच्चासण्णे चिट्ठिदुं । ताएहि अण्णदो गच्छम्ह । (इत्युत्थातुमिच्छति)

५४. विदू—भो मित्त भाअदि खु एसा । अहं पुव्वपठिदविज्जाबलेण सम्पदं एणां मुहुत्तअं धारेमि । (विमृश्य) भोदि किं एत्थ

४९. एतयानन्यसदृशयाकृत्यैष स भगवत्या गौर्याः प्रसाद इति तर्कयामि ।

५१. हञ्जे ! अतिसाध्वसेन न शक्नोम्येतस्य सम्मुखं स्थातुम् ।

५२. भर्तृदारिके ! किमेतत् ?

५३. हञ्जे ! न शक्नोम्येतस्यात्यासन्ने स्थातुम् । तदेह्यन्यतो गच्छावः ।

५४. भो मित्र! बिभेति खल्वेषा । अहं पूर्वपठितविद्याबलेन साम्प्रत-

१६. द्रुतविलम्बितम्.

तुम्हाणं तवोवणे ईदिसो आकारो जं आअदो अदिही वअण-
मेत्तकेणवि ण संभावीअदि ?

५५. चेटी—(नायकमवलोक्य स्वगतम्) अणुरज्जदि विअ एत्थ एदाए दिट्ठी। भवदु एव्वं दाव भणिस्सं। (प्रकाशम्) भट्टिदारिए जुत्तं भणादि बम्हणो। उचिदो क्खु दे अदिहिजणसक्कारो। ता कीस एदस्सिं महाणुभावे एव्वं पडिवत्तिमुढा चिट्ठसि। अहवा चिट्ठतुमं अहं एव्व जहाणुरूवं करिस्सं। (नायकमुद्दिश्य) साअदं महाभाअस्स? आसणपडिग्गहेण अलंकरेदु इमं पदेसं अज्जो।

५६. विदू—भो वअस्स सोहणं एसा चदुरिआ भणादि। एवविसिअ मुहुत्तअं वीसमम्ह।

५७. नाय—युक्तमाह भवान्। (इत्युपविशतः)

---

मेनां मुहूर्तं धारयामि। भवति किमत्र युष्माकं तपोवन ईदृश आचारो यदागतोऽतिथिर्वचनमात्रेणापि न संभाव्यते ?

५५. अनुरज्यत इवात्रैतस्या दृष्टिः। भवत्वेवं तावद्भणिष्यामि। भर्तृदारिके! युक्तं भणति ब्राह्मणः। उचितः खलु तेऽतिथिजनसत्कारः। तत्किमेतस्मिन्महानुभाव एवं प्रतिपत्तिमूढा तिष्ठसि? अथवा तिष्ठ त्वम् अहमेव यथानुरूपं करिष्यामि। स्वागतं महाभागस्य? आसनपरिग्रहेणालंकरोत्विमं प्रदेशमार्यः।

५६. भो वयस्य! शोभनमेषा चतुरिका भणति। उपविश्य मुहूर्तं विश्राम्यावः।

५८. नायि—(चेटिकामुद्दिश्य) अइ परिहाससीले मा एव्वं करेहि। जइ कदावि कोवि तावसो पेक्खदि तदो मं अविणीदेत्ति संभावेदि।

(ततः प्रविशति तापसः)

५९. तापसः—आज्ञापितोऽस्मि कुलपतिना कौशिकेन यथा 'वत्स शाण्डिल्य पितुराज्ञया सिद्धयुवराजमित्रावसुर्भविष्यद्विद्याधर-चक्रवर्तिनं कुमारजीमूतवाहनमिहैव मलयपर्वते क्वापि वर्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमद्य गतः। तद्य प्रतीक्षमा-णाया मलयवत्याः कदाचिन्मध्यन्दिनसवनवेलातिक्रामेत्। तदेनामाहूयागच्छ'—इति। ततो यावद्गौरीगृहमेव गत्वा मलयवतीमाकार्य गच्छामि। (परिक्रम्य भूमिं निरूप्य सविस्मयम् अये! कस्य पुनरियं पांसुलप्रदेशे प्रकाशचक्र-चिह्ना पदपंक्तिः। (पुरतो जीमूतवाहनं निर्दिश्य) नूनमस्यैवेयं महानुभावस्य पदवी। तथा हि—

उष्णीषः स्फुट एष मूर्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्धते।
चक्राङ्कं च यथा पदद्वयमिदं मन्ये तथा कोऽप्ययं
नो विद्याधरचक्रवर्तिपदवीमप्राप्य विश्राम्यति॥ १७

---

५८. अयि परिहासशीले! मैवं कुरु। यदि कदापि कोऽपि तापसः प्रेक्षते ततो मामविनीतेति सम्भावयति।

---

१७. शार्दूलविक्रीडितम्.

अथवा कृतं संदेहेन। व्यक्तमनेनैव जीमूतवाहनेन भवितव्यम्। (मलयवतीं निरूप्य) अये इयमपि राजपुत्री मलयवती (उभौ विलोक्य) चिरात्खलु युक्तकारी विधिः स्याद्यदि युगलमेतदन्योन्यानुरूपं घटयेत्। (उपसृत्य नायकं निर्दिश्य) स्वस्ति भवते।

६०. नाय—भगवन्! जीमूतवाहनोऽभिवादयते। (उत्थातुमिच्छति)

६१. ताप—अलमलमभ्युत्थानेन। ननु 'सर्वस्याभ्यागतो गुरुः' इति भवानेवास्माकं पूज्यः। तद्यथासुखं स्थीयताम्।

६२. नायि—अज्ज पणमामि।

६३. ताप—(नायिकां निर्दिश्य)वत्से! अनुरूपभर्तृगामिनी भूयाः। राजपुत्रि! त्वामाह कुलपतिः कौशिकः—यथा नातिक्रामति मध्यन्दिनसवनवेला तत्त्वरितमागम्यतामिति।

६४. नायि—जं गुरुजणो आणवेदि। (इत्युत्थाय निःश्वस्य च स्वगतम्)

एक्कत्तो गुरुवअणं अण्णत्तो दइअदंसणसुहं त्ति।
गमणागमणविमूढं अज्जवि दोलाइ मे हिअअम्॥ १८

(सलज्जं सानुरागं च नायकं तिर्यक्पश्यन्ती तापससहिता निष्क्रान्ता)

६५. नाय—(सोत्कण्ठं निःश्वस्य नायिकां पश्यन्)

---

६२. आर्य! प्रणमामि।

६४. यद्गुरुजन आज्ञापयति।

एकतो गुरुवचनमन्यतो दयितदर्शनसुखमिति।
गमनागमनविमूढमद्यापि दोलायते मे हृदयम्॥

---

१८. आर्या.

अनया जघनाभोगभरमन्थरयातया ।
अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥ १९

६६. विदू—भो दिट्ठं जं पेक्खिदव्वं । सुदं जं सोदव्वं । ता दाणिं मज्झण्णसूरसन्दावदिउणिदो विअ मे जठरग्गी धमधमाअदि । ता एहि निक्कमम्ह जेण बम्हणो अदिही भविअ मुणिजणसआसादो लद्धेहिं कन्दमूलफलेहिं वि दाव पाणधारणं करिस्सं ।

६७. नाय—(ऊर्ध्वमवलोक्य) अयेऽयं मध्यमध्यास्ते नभस्तलस्य भगवान्सहस्रदीधितिः । तथा हि—

तापात्तत्क्षणघृष्टचन्दनरसापाण्डू कपोलौ वहन्
संसक्तैर्निजकर्णतालपवनैः संवीज्यमानाननः ।
संप्रत्येष विशेषसिक्तहृदयो हस्तोज्झितैः सीकरैः
ग्लायच्छल्लकदुःसहामिव दशां धत्ते गजानां पतिः ॥ २०

तदेह्यावामपि गच्छावः ।

(इति निष्क्रान्तौ)

इति प्रथमोऽङ्कः ।

---

६६. भो दृष्टं यत्प्रेक्षितव्यम् । श्रुतं यच्छ्रोतव्यम् । तदिदानीं मध्याह्नसूर्यसंतापद्विगुणित इव मे जठराग्निर्धमधमायते । तदेहि निष्क्रामावः येन ब्राह्मणोऽतिथिर्भूत्वा मुनिजनसकाशाल्लब्धैः कन्दमूलफलैरपि तावत् प्राणधारणं करिष्ये ।

---

१९. श्लोकः २०. शार्दूलविक्रीडितम्.

॥ श्रीः ॥

# ॥ द्वितीयोऽङ्कः ॥

## ॥ प्रवेशकः ॥

(ततः प्रविशति चेटी)

१. चेटी—आणत्तम्हि भट्टिदारिआए मलअवदीए जहा—'हञ्जे मणोहरिए अज्ज चिरअदि मे भादुओ अज्जमित्तावसू। ता लहु गदुअ जाणेहि कि आअदो ण वेत्ति। ताजहाणत्तं अणुचिट्ठामि। (परिक्रम्य नेपथ्याभिमुखमवलोक्य) का उण एसा तुरिदतुरिदं इदो एव्व। आअच्छदि। (निरूप्य) अए कहं चउरिआ।

(ततः प्रविशति द्वितीया चेटी)

प्रथमा—(उपसृत्य)हला चउरिए किं णिमित्तं उण मं परिहरिअ दुए एव्वं तुवरिदाए गच्छीअदि।

२. द्वितीया—हला मणोहरिए आणत्तम्हि भट्टिदारिआए मलअवदीए—'हञ्जे चउरिए कुसुमावचअपडिस्समणीसहं मे सरीरं। सरदादवजणिदो अअं मे संदावो अहिअदरं बाधेदि। ता

---

१. आज्ञप्तास्मि भर्तृदारिकया मलयवत्या यथा—'हञ्जे मनोहरिके! अद्य चिरयति मे भ्रातार्यमित्रावसुः। तल्लघु गत्वा जानीहि किमागतो न वा' इति। तद्यथाज्ञप्तमनुतिष्ठामि। का पुनरेषा त्वरितत्वरितमित एवागच्छति। अये कथं चतुरिका?

हला चतुरिके! किं निमित्तं पुनर्मां परिहृत्य त्वयैवं त्वरितया गम्यते?

२. हला मनोहरिके! आज्ञप्तास्मि भर्तृदारिकया मलयवत्या—'हञ्जे चतुरिके! कुसुमापचयपरिश्रमनिःसहं मे शरीरम्। शरदातप-

गच्छ तुमं बालकदलीदलपरिक्खित्ते चन्दणलदाघरे चन्दमणिसिलाअलं सज्जीकरेहि' त्ति। अणुचिट्ठिदं अ मए जहा आणत्तं। जाव गदुअ भट्टिदारिआए णिवेदेमि।

३. प्रथमा—जइ एव्वं ता लहु गदुअ णिवेदेहि। जेण से ताहिं गदाए उवसमिस्सदि संदावो।

४. द्वितीया—(विहस्यात्मगतम्) ण ईरिसो से संदावो जो एव्वं उवसमिस्सदि। विचित्तरमणीअं चन्दणलदाघरं पेक्खन्तीए अहिअदरो संदावो भविस्सदित्ति तक्केमि। (प्रकाशम्) ता गच्छ तुमं। अहं पि सज्जीकिदं मणिसिलाअलं त्ति गदुअ भट्टिदारिआए णिवेदेमि।

(इत्युभे निष्क्रान्ते)

प्रवेशकः।

---

जनितोऽयं मे संतापोऽधिकतरं बाधते। तद्गच्छ त्वं बालकदलीदलपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुरु'—इति। अनुष्ठितं च मया यथाज्ञप्तम्। यावद्गत्वा भर्तृदारिकायै निवेदयामि।

३. यद्येवं तल्लघु गत्वा निवेदय। येनास्यास्तत्र गताया उपशमिष्यति संतापः।

४. नेदृशस्तस्याः संतापो य एवमुपशमिष्यति। विचित्ररमणीयं चन्दनलतागृहं प्रेक्षमाणाया अधिकतरः संतापो भविष्यतीति तर्कयामि। तद्गच्छ त्वम्। अहमपि सज्जीकृतं मणिशिलातलमिति गत्वा भर्तृदारिकायै निवेदयामि।

(ततः प्रविशति सोत्कण्ठा मलयवती चेटी च)

५. नायिका—(निःश्वस्यात्मगतम्) अइ हिअअ तधा णाम तस्सिं जणे लज्जाए मं परंमुहीकरिअ दाणिं अप्पणा तहिं एव्व गदोसित्ति अहो दे अप्पंभरित्तणं। (प्रकाशम्) हञ्जे आदेसेहि मे भअवदीए आअदणं।

६. चेटी—णं चन्दणलदाघरं भट्टिदारिआ पत्थिदा।

७. नायि—(सलज्जम्) हञ्जे सुट्ठु तुए सुमराविदह्मि। ता एहि तहिं एव्व गच्छह्म।

८. चेटी—एदु एदु भट्टिदारिआ। (इति चतुरिका तदेव चन्दनलतागृहं याति)

नायि—(अन्यतो गच्छति)

चेटी—(पृष्ठतो दृष्ट्वा सोद्वेगमात्मगतम्) अह्मो से सुण्णाहिअअत्तणं कहं तं एव्व देवीभवणं पत्थिदा। (प्रकाशम्) भट्टिदारिए णं इदो चन्दणलदाघरं ता इदो एहि दाव।

---

५. अयि हृदय! तथा नाम तस्मिञ्जने लज्जया मां पराङ्मुखीकृत्य इदानीमात्मना तत्रैव गतोऽसीति अहो त आत्मंभरित्वम्। हञ्जे! आदेशय मे भगवत्या आयतनम्।

६. ननु चन्दनलतागृहं भर्तृदारिका प्रस्थिता।

७. हञ्जे! सुष्ठु त्वया स्मारितास्मि। तदेहि तत्रैव गच्छावः।

८. एतु एतु भर्तृदारिका।

अहोऽस्याः शून्यहृदयत्वम्। कथं तदेव देवीभवनं प्रस्थिता? भर्तृदारिके! नन्वितश्चन्दनलतागृहम् तदित एहि तावत्।

नायि—(सविलक्षस्मितं तथा करोति)

चेटी—इदं चन्दणलदाघरं ता पविसिअ चन्दमणिशिलाअले उववििसिअ समस्ससदु भट्टिदारिआ । (उभे उपविशतः)

९. नायि—(निःश्वस्यात्मगतम्) भअवं कुसुमाउह जेण तुमं रूवसोहाए णिज्जिदोसि तस्स तुए ण किंपि किदं । मज्झ उण अणवरद्धाए वि अबलेत्ति करिअ पहरन्तो ण लज्जोसि । (आत्मानं निर्वर्ण्य मदनावस्थां नाटयन्ती प्रकाशम्) हञ्जे कीस उण घणपल्लवणिरुद्धसूरकिरणं त एव्व चन्दणलदाघरं ण मे अज्जवि संदावदुःखं अवणेदि ।

१०. चेटी—(सस्मितम्) जाणामि अहं एत्थ सन्दावस्स कालणं । किं उण असंभाविणी भट्टिदारिआ ण तं पडिवज्जिस्सदि ।

११. नायि—(आत्मगतम्) कहं लक्खिदा विअ अहं एदाए । तधावि पुच्छिस्सं । (प्रकाशम्) हञ्जे किं तं जं ण पाडिवज्जिअदि । ता कहेहि दाव किं तं कालणं ।

---

इदं चन्दनलतागृहम् । तत्प्रविश्य चन्द्रमणिशिलातल उपविश्य समाश्वसितु भर्तृदारिका ।

९. भगवन् कुसुमायुध ! येन त्वं रूपशोभया निर्जितोऽसि तस्य त्वया न किमपि कृतम् । मम पुनरनपराद्धाया अप्यबलेति कृत्वा प्रहरन्न लज्जसे । हञ्जे ! कस्मात्पुनर्घनपल्लवनिरुद्धसूर्यकिरणं तदेव चन्दनलतागृहं न मेऽद्यापि संतापदुःखमपनयति ।

१०. जानाम्यहमत्र सन्तापस्य कारणम् । किं पुनरसंभाविनी भर्तृदारिका न तत्प्रतिपत्स्यते ।

११. कथं लक्षितेवाहमेतया । तथापि पृच्छामि । हञ्जे ! किं तद् ?

ज्जिअदि । ता कहेहि दाव किं तं कालणं ।

१२. चेटी—एसो दे हिअअट्ठिदो वरो ।

१३. नायि—(सहर्षं ससंभ्रममुत्थाय द्वित्राणि पदानि गत्वा) कहिं कहिं सो ।

१४. चेटी—(उत्थाय सस्मितम्) भट्टिदारिए सो को ।

(नायि—सलज्जमुपविश्याधोमुखी तिष्ठति)

चेटी—भट्टिदारिए णं एदह्मि वत्तुकामा—एसो दे हिअअट्ठिदो वरो एव्व देवीए दिण्णो सिविणए । पच्छा वि क्खणं एव्व पविमुक्ककुसुमबाणो विअ मअरद्धओ भट्टिदारिआए दिट्ठो । सो दे इमस्स संदावस्स कालणं जेण एदं सहावसीअलंपि चन्दणलदाघरं ण दे संदावदुक्खं अवणेदि ।

१५. नायि—(चतुरिकाया अलकं स्पृशन्ती) हञ्जे चउरिआ क्खु तुमं । किं दे अवरं पच्छादीअदि । ता कहइस्सं ।

---

यन्न प्रतिपद्यते । तत् कथय तावत्किं तत् कारणम् ?

१२. एष ते हृदयस्थितो वरः ।

१३. कुत्र कुत्र सः ?

१४. भर्तृदारिके ! स कः ?

भर्तृदारिके! नन्वेतदस्मि वक्तुकामा । एष ते हृदयस्थितो वर एव देव्या दत्तः स्वप्ने । पश्चादपि क्षणमेव प्रविमुक्तकुसुमबाण इव मकरध्वजो भर्तृदारिकया दृष्टः । स तेऽस्य संतापस्य कारणम् येनैतत्स्वभावशीतलमपि चन्दनलतागृहं न ते संताप-दुःखमपनयति ।

१५. हञ्जे ! चतुरिका खलु त्वम् ! किं तेऽपरं प्रच्छाद्यते ? तत्कथयिष्यामि ।

१६. **चेटी**—भट्टिदारिए दाणिं एव्व कहिदं। किं बहुणा पलवि-
देण। अलं संभमेण कामसंदावेण अ। जइ अहं चउरिआ
तदा सोवि भट्टिदारिअं अवेक्खन्तो ण मुहुत्तंअपि अण्णेहिं
अहिरमिस्सदि। एदंपि मए लक्खिदं एव्व।

१७. **नायि**—(सास्रम्) हञ्जे कुदो अह्माणं एरिसी भाअहेअदा।

१८. **चेटी**—भट्टिदारिए मा एव्वं भण। किं महुसूअणो वच्छत्थ-
लेण लच्छीं अणुव्वहन्तो णिव्वुदो होदि।

१९. **नायि**—किं सअणो पिअं वज्जिअ अण्णं भणिदुं जाणेदि।
सहि अदो वि मे संदावो अधिअदरं बाधेदि जं सो महा-
णुभावोवाआमेत्तकेण वि अकिदपडिवत्ती अदक्खिणेत्ति मं
संभावइस्सदि। (इति रोदिति)

---

१६. भर्तृदारिके! इदानीमेव कथितम्। किं बहुना प्रलपितेन। अलं
संभ्रमेण कामसंतापेन च। यद्यहं चतुरिका तदा सोऽपि
भर्तृदारिकामप्रेक्षमाणो न मुहूर्तमप्यन्यैरभिरंस्यति। एतदपि
मया लक्षितमेव।

१७. हञ्जे! कुतोऽस्माकमीदृशी भागधेयता?

१८. भर्तृदारिके! मैवं भण। किं मधुसूदनो वक्षःस्थलेन लक्ष्मी-
मनुद्वहन्निर्वृतो भवति?

१९. किं स्वजनः प्रियं वर्जयित्वान्यद्भणितुं जानाति? सखि! अतो-
ऽपि मे संतापोऽधिकतरं बाधते यत्स महानुभावो वाङ्मा-
त्रेणाप्यकृतप्रतिपत्तिरदक्षिणेति मां संभावयिष्यति।

२०. चेटी—भट्टिदारिए मा रोद। अहवा कहं ण रोदिस्सदि। अदिसअं से हिअअसंदावो बाधेदि। ता किं दाणिं एत्थ करइस्सं। ता जाव चन्दणलदापल्लवरसं से हिअए दाइस्सं। (उत्थाय चन्दनपल्लवं गृहीत्वा निष्पीड्य रसं हृदये ददाति) भट्टिदारिए णं भणामि मा रोद। अअं क्खु थणवट्टलदिण्णो चन्दणपल्लवरसो इमेहिं अविरदपडन्तेहिं बाहबिन्दूहिं उह्णीकिदो ण देहिअअस्स संदावदुक्खं अवणेदि। (कदलीपत्रमादाय वीजयति)

२१. नायि—(हस्तेन तां निवारयति) सहि। मा वीजेहि उह्णो क्खु एसो कदलीदलमारुओ।

२२. चेटी—भट्टिदारिए मा इमस्स दोसं कहेहि।

कुणसि घणतरुणचन्दणपल्लवसंसग्गसीअलं पि इमं।
णीसासेहिं तुमं एव्व कदलीदलमारुअं उण्हं॥ १

---

२०. भर्तृदारिके! मा रुदिहि। अथवा कथं न रोदिष्यति। अतिशयमस्या हृदयसंतापो बाधते। तत्किमिदानीमत्र करिष्यामि। तद्यावच्चन्दनलतापल्लवरसमस्या हृदये दास्यामि। भर्तृदारिके! ननु भणामि मा रुदिहि। अयं खलु स्तनवर्तुलदत्तश्चन्दनपल्लवरस एभिरविरतपतद्भिर्बाष्पबिन्दुभिरुष्णीकृतो न ते हृदयस्य संतापदुःखमपनयति।

२१. सखि! मा वीजय। उष्णः खल्वेष कदलीदलमारुतः।

२२. भर्तृदारिके! मास्य दोषं कथय।

करोषि घनतरुणचन्दनपल्लवसंसर्गशीतलमपीमम्।
निश्श्वासैस्त्वमेव कदलीदलमारुतमुष्णम्॥

---

१. आर्या.

२३. नायि—(सास्रम्) सहि अत्थि कोवि इमस्स संदावस्स उव-
समोवाओ ।

२४. चेटी—भट्टिदारिए अत्थि जइ सो एव्व इहागच्छदि ।

(ततः प्रविशति नायको विदूषकश्च)

२५. नायकः—

व्यावृत्यैव सितासितेक्षणरुचा तानाश्रमे शाखिनः
कुर्वन्त्या विटपावसक्तविलसत्कृष्णाजिनौघानिव ।
यद्दृष्टोऽस्मि तया मुनेरपि पुरस्तेनैव मय्याहते
पुष्पेषो! भवता मुधैव किमिति क्षिप्यन्त एते शराः ॥ २

२६. विदूषकः—भो वअस्स कहिं क्खु गदं दे तं धीरत्तणं ।

२७. नाय—वयस्य ! ननु धीर एवास्मि । कुतः—

नीताः किं न निशाः शशाङ्कधवला नाघ्रातमिन्दीवरं
किं नोन्मीलितमालतीसुरभयः सोढाः प्रदोषानिलाः ।
झङ्काराः कमलाकरे मधुलिहां किं वा मया न श्रुता
निर्व्याजं विधुरेष्वधीर इति मां येनाभिधत्ते भवान् ॥ ३

(विचिन्त्य) अथवा सम्यगभिहितं वयस्येन । नन्वधीर एवास्मि ।

स्त्रीहृदयेन न सोढाः क्षिप्ताः कुसुमेषवोऽप्यनङ्गेन ।
येनाद्यैव पुरस्तव वदामि धीर इति स कथमहम् ॥ ४

---

२३. सखि ! अस्ति कोऽप्यस्य संतापस्योपशमोपायः ।

२४. भर्तृदारिके ! अस्ति यदि स एवेहागच्छति ।

२६. भो वयस्य ! कुत्र खलु गतं ते तद्धीरत्वम् ?

---

२, ३. शार्दूलविक्रीडितम्. ४. आर्या.

२८. विदू—(आत्मगतम्)एव्वं अधीरत्तणं पडिवज्जन्देण आवि-
क्किदो अणेण महन्दो हिअअस्स आवेगो । ता जाव कहं
एव्व एदं अक्खिवामि । (प्रकाशम्) भो वअस्स, कीस
उण अज्ज तुमं लहु एव्व गुरुजणं सुस्सुसिअ इह आगदो ।

२९. नाय—वयस्य! स्थाने खलु भवतः प्रश्नः । कस्य वान्यस्यैत-
त्कथनीयम्? अद्य खलु स्वप्ने जानामि—सैव प्रियतमा
(अङ्गुल्या निर्दिशन्) अत्र चन्दनलतागृहे चन्द्रकान्तमणिशि-
लायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती
मया दृष्टा। तदिच्छामि स्वप्नानुभूतदयितासमागमरम्येऽस्मि-
न्नेव प्रदेशे दिवसशेषमतिवाहयितुम् तदेहि गच्छावः ।

३०. विदू—एदु एदु भवं । (परिक्रामतः)

३१. चेटी—(कर्णं दत्वा ससंभ्रमम्) भट्टिदारिए पदसद्दो विअ
सुणीअदि ।

३२. नायि—(ससंभ्रममात्मानं पश्यन्ती) हञ्जे! मा ईरिसं आआरं
पेक्खिअ को वि मे हिअअं तुलइस्सदि । ता उट्ठेहि इमिणा

---

२८. एवमधीरत्वं प्रतिपद्यमानेनाविष्कृतोऽनेन महान् हृदयस्यावेगः।
तद्यावत्कथमेवैनमाक्षिपामि । भो वयस्य! कस्मात्पुनरद्य त्वं
लघ्वेव गुरुजनं शुश्रूषयित्वेहागतः ।

३०. एतु एतु भवान् ।

३१. भर्तृदारिके! पदशब्द इव श्रूयते ।

३२. हञ्जे! मेदृशमाकारं प्रेक्ष्य कोऽपि मे हृदयं तुलयिष्यति ।

रत्तासोअपाअवेण अन्तरिदाओ पेक्खह्म को एसो त्ति ।
(तथा कुरुतः)

३३. विदू—एदं तं चन्दणलदाघरं । ता एहि पविसह्म ।

(नाट्येन प्रविशतः)

३४. नाय—(विलोक्य)

चन्दनलतागृहमिदं सचन्द्रमणिशिलमपि प्रियं न मम ।
चन्द्राननया रहितं चन्द्रिकया मुखमिव निशायाः ॥ ५

३५. चेटी—(दृष्ट्वा) भट्टिदारिए दिट्ठिआ वड्ढसे । सो तव्व दे एसो हिअअवल्लहो जणो ।

३६. नायि—(दृष्ट्वा सहर्षं ससाध्वसं च) हञ्जे! एणं पेक्खिअ आदिसद्धसेण ण सक्कुणोमि इह एव्व आसण्णे चिट्ठिदुं । कदा वि एसो मं पेक्खादि । ता एहि अण्णदो गच्छम्ह । (सोत्कम्पं पदं दत्वा)हञ्जे वेवदि मे वामोरू ।

---

तदुत्तिष्ठ अनेन रक्ताशोकपादपेनान्तरिते प्रेक्षावहे क एष इति।

३३. एतत्तच्चन्दनलतागृहम् । तदेहि प्रविशावः ।

३५. भर्तृदारिके ! दिष्ट्या वर्धसे । स एव त एषहृदयवल्लभो जनः ।

३६. हञ्जे ! एनं प्रेक्ष्यातिसाध्वसेन न शक्नोमीहैवासन्ने स्थातुम् । कदाप्येष मां प्रेक्षते । तदेह्यन्यतो गच्छावः । हञ्जे ! वेपते मे वामोरुः ।

---

५. आर्या.

३७. चेटी—(विहस्य) अइ कादरे इह ट्ठिदं तुमं को पेक्खादि। णं विसुमरिदो एव्व दे एसो अग्गदो रत्तासोअपादवो। ता इह एव्व उवविसिअ चिट्ठम्ह। (तथा कुरुतः)

३८. विदू—(निरूप्य) भो अवस्स एसा सा चन्दमणिसिळा।

(नाय—सबाष्पं निःश्वसिति)

३९. चेटी—भट्टिदारिए आलावो वि सुणीअदि। ता अवहिदहिअआओ सुणेम्ह। (उभे आकर्णयतः)

४०. विदू—(हस्तेन चालयन्) भो वअस्स णं भणामि एसा सा चन्दमणिसिलेत्ति।

४१. नाय—वयस्य! सम्यगुपलक्षितं भवता। (हस्तेन निर्दिश्य)

शशिमणिशिला सेयं यस्यां विपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा।
चिरयति मयि व्यक्ताकूता मनाक् स्फुरिताधरा
नियमितमनोमन्युर्दृष्टा मया रुदती प्रिया॥ ६

तत्तस्यामेव चन्द्रमणिशिलायामुपविशावः।

(उभावुपविशतः)

---

३७. अयि कातरे! इह स्थितां त्वां कः प्रेक्षते? ननु विस्मृत एव त एषोऽग्रतो रक्ताशोकपादपः। तदिहैवोपविश्य तिष्ठावः।

३८. भो वयस्य! एषा सा चन्द्रमणिशिला।

३९. भर्तृदारिके! आलापोऽपि श्रूयते। तदवहितहृदये शृणुवः।

४०. भो वयस्य! ननु भणाम्येषा सा चन्द्रमणिशिलेति।

---

६. हरिणी.

४२. नाथ—(विचिन्त्य) हञ्जे का उण एसा हविस्सदि ।

४३. चेटी—भट्टिदारिए जधा अम्हे ओवारिदा एणं पेक्खम्ह, मा णाम तुमं पि एव्वं दिट्ठा ।

४४. नायि—जुज्जइ एदं । क उण पणअकुविदं पिअजणं हिअए कदुअ मन्तेदि ।

४५. चेटी—भट्टिदारिए मा ईरिसं आसङ्क । पुणो वि दाव सुणेम्ह ।

४६. विदू—(आत्मगतम्) अहिरमदि एसो एदाए कहाए। ता भोदु, एदं एव्व वादइस्सं । (प्रकाशम्) भो अवस्स, तदो सा रुददी तुए किं भणिदा?

४७. नाय—वयस्य ! इदमुक्ता ।

निष्यन्दत इवानेन मुखचन्द्रोदयेन ते ।

एतद्बाष्पाम्बुना सिक्तं चन्द्रकान्तशिलातलम् ॥

---

४२. हञ्जे ! का पुनरेषा भविष्यति ।

४३. भर्तृदारिके ! यथावामपवारिते एनं प्रेक्षावहे मा नाम त्वमप्येवं दृष्टा ।

४४. युज्यत एतत् । कं पुनः प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयते ।

४५. भर्तृदारिके ! मेदृशमाशङ्क । पुनरपि तावच्छृणुवः ।

४६. अभिरमत एष एतया कथया । तद्भवतु, एतामेव वादयिष्यामि । भो वयस्य ! ततः सा रुदती त्वया किं भणिता ?

---

७. श्लोकः.

४८. नायि—(सरोषम्) चउरिए अत्थि किंचि अदो वि अवरं सोदव्वं (सास्रम्) ता एहि गच्छह्म ।

४९. चेटी—(हस्ते गृहीत्वा) भट्टिदारिए मा एव्वं भण । जेण तुमं दिट्ठा सो अण्णं भणिस्सदित्ति णहि मे हिअअं पत्ताअदि । ता कहावसाणं एव्व पडिवालएम्ह ।

५०. नाय—वयस्य ! जाने तामेवास्यां शिलायामालिख्य तया चित्रगतमात्मानं विनोदयामीति । तदित एव गिरितटान्मनःशिलाशकलान्यादायागच्छ ।

५१. विदू—जं भवं आणवेदि । (परिक्रम्य गृहीत्वोपसृत्य) भो तुए एक्को वण्णओ आणाविदो । मए उण इह पव्वदे सुलहा पञ्चजाईआ वण्णआ आणीदा । ता आलिहदु भवं । (एवं वर्णकानुपनयति)

५२. नाय—वयस्य! साधु कृतम् । (गृहीत्वा शिलायां तामालिखन् सरोमाञ्चम्) सखे ! पश्य पश्य—

अक्लिष्टबिम्बशोभाधरस्य नयनोत्सवस्य शशिन इव ।
दयितामुखस्य रेखा सुखयति नः प्रथमदृष्टेयम् ॥ ८

(इति लिखति)

---

४८. चतुरिके! अस्ति किंचिदतोऽप्यपरं श्रोतव्यम् । तदेहि गच्छावः ।

४९. भर्तृदारिके ! मैवं भण । येन त्वं दृष्टा सोऽन्यां भणिष्यतीति नहि मे हृदयं प्रत्येति । तत्कथावसानमेव प्रतिपालयावः ।

५१. यद्भवानाज्ञापयति । भो त्वयैको वर्णक आज्ञापितः मया पुनरिह पर्वते सुलभाः पञ्चजातीया वर्णका आनीताः । तदालिखतु भवान् ।

---

८. आर्या.

५३. विदू—(सकौतुकं निर्वर्ण्य) भो वअस्स अप्पच्चक्खेपि एव्वं णाम रूअं लिहीअदि । अहो अच्चरिअं ।

५४. नाय—(सस्मितम्) वयस्य ! किमत्राश्चर्यम् ?

प्रिया सन्निहितैवेयं सङ्कल्पैः स्थापिता पुरः ।

दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत्कोऽत्र विस्मयः ॥ ९

५५. नायि—(सास्रम्)चउरिए जाणिदं क्खु कहावसाणं । ताएहि मित्तावसुं पेक्खम्ह ।

५६. चेटी—(सविषादमात्मगतम्)कहं जीविदणिरपेक्खो विअ से आलावो । (प्रकाशम्) भट्टिदारिए णं गदा एव्व तहिं मणोहरिआ । ता कदाचि भट्टा मित्तावसू इह एव्व आअच्छदि ।

(ततः प्रविशति मित्रावसुः)

५७. मित्रावसुः—आज्ञापितोऽस्मि तातेन यथा—'वत्स मित्रावसो! कुमारजीमूतवाहनोऽस्माभिरिहासन्नतरः परीक्षितः कृतो योग्यो वरः । तदस्मै वत्सा मलयवती प्रतिपाद्यताम्'—इति । अहं तु स्नेहपराधीनतयान्यदेव किमप्यवस्थान्तरमनुभवामि । यतः—

---

५३. भो वयस्य! अप्रत्यक्षेऽप्येवं नाम रूपं लिख्यते। अहो आश्चर्यम्।

५५. चतुरिके! ज्ञातं खलु कथावसानम्। तदेहि मित्रावसुं प्रेक्षावहे ।

५६. कथं जीवितनिरपेक्ष इवास्या आलापः । भर्तृदारिके ! ननु गतैव तत्र मनोहरिका । तत्कदाचिद्भर्ता मित्रावसुरिहैवागच्छति ।

---

९. श्लोकः

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां संमतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान्विनीतो युवा ।
यश्चासूनपि संत्यजेत्करुणया सत्त्वार्थमभ्युद्यत-
स्तेनास्मै ददतः स्वसारमतुलां तुष्टिर्विषादश्च मे ॥ १०

श्रुतं च मयासौ जीमूतवाहनोऽत्रैव गौर्याश्रमसंबद्धे चन्दन-लतागृहे वर्तत इति । तदेतच्चन्दनलतागृहं यावत्प्रविशामि । (इति प्रविशति)

५८. विदू—(ससंभ्रममवलोक्य) भो वअस्स पच्छादेहि इमिणा कदलीवत्तेण इमं चित्तगदं कण्णअं ! एसो क्खु सिद्धजुवरा-अमित्तावसू इह आगदो कदावि पेक्खिस्सदि ।

(नाय—कदलीपत्रेण चित्रमाच्छादयति)

५९. मित्रा—(प्रविश्य) भो कुमार ! मित्रावसुः प्रणमति !

६०. नाय—(दृष्ट्वा) मित्रावसो ! स्वागतम् ? इहोपविश्यताम् ।

६१. चेटी—भट्टिदारिए आअदो भट्टि मित्तावसू ।

६२. नायि—हञ्जे, पिअं मे ।

६३. नाय—मित्रावसो ! अपि कुशली सिद्धराजो विश्वावसुः ?

६४. मित्रा—कुशली तातः । तदादेशेनास्मि त्वत्सकाशमागतः ।

---

५८. भो वयस्य ! प्रच्छादयानेन कदलीपत्रेणेमां चित्रगतां कन्यकाम् । एष खलु सिद्धयुवराजमित्रावसुरिहागतः कदापि प्रेक्षिष्यते ।

६१. भर्तृदारिके ! आगतो भर्ता मित्रावसुः ।

६२. हञ्जे ! प्रियं मे ।

---

१०. शार्दूलविक्रीडितम्.

६५. **नाय**—किमाह तत्रभवान्?

६६. **नायि**—(स्वगतम्) सुणिस्सं दाव किं तादेण संदिट्ठं।

६७. **मित्रा**—इदमाह तातः—अस्ति मे दुहिता मलयवती नाम जीवितमिवास्य सर्वस्यापि सिद्धराजान्वयस्य। सा मया तुभ्यं प्रदत्ता। तदियं प्रतिगृह्यताम् इति।

६८. **चेटी**—(विहस्य सहर्षम्) भट्टिदारिए! किं ण कुप्पसि दाणिं।

६९. **नायि**—(सस्मितं सलज्जं चाधोमुखी स्थित्वा) हञ्जे, मा हस। किं विसुमरिदं दे एअस्स अण्णहिअअत्तणं।

७०. **नाय**—(अपवार्य) वयस्य! संकटे पतिताः स्मः।

७१. **विदू**—(अपवार्य)भो जाणामि ण तं वज्जिअ अण्णस्सिं चित्तं दे अहिरमदि। ता जधा तधा जं किंपि भणिअ विसज्जीअदु एसो।

७२. **नायि**—(सरोषमात्मगतम्)हदास को वा एदं ण जाणेदि।

७३. **नाय**—मित्रावसो! क इव नेच्छति भवद्भिः सह श्लाघ्यमीदृशं संबन्धम्। किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्तयितुम्। अतो नाहमेनां प्रतिग्रहीतुमुत्सहे।

(नायि—मूर्च्छां नाटयति)

---

६६. श्रोष्यामि तावत् किं तातेन संदिष्टम्?

६८. भर्तृदारिके! किं न कुप्यसीदानीम्?

६९. हञ्जे! मा हस। किं विस्मृतं त एतस्यान्यहृदयत्वम्?

७१. भो जानामि न तां वर्जयित्वान्यस्मिंश्चित्तं तेऽभिरमते। तद्यथा तथा यत्किंचिदपि भणित्वा विसृज्यतामेषः।

७२. हताश! को वैतन्न जानाति?

७४. चेटी—समस्ससिदु समस्ससिदु भट्टिदारीआ ।

७५. विदू—भो पराहीणो क्खु एसो । किं एदेण अणुणीदेण । गुरुअणं से गदुअ अब्भत्थेहि ।

७६. मित्रा—(स्वगतम् )साधूक्तमनेन । नायं गुरुजनवचनमतिक्रामति । अस्य गुरुरप्यस्मिन्नेव गौर्याश्रमे प्रतिवसति । तद्यावद्गत्वास्य पित्रोर्मलयवतीं प्रतिपादयामि ।

(नायि—समाश्वसिति)

मित्रा—(प्रकाशम्) एवं निवेदितात्मनोऽस्मान्प्रत्याचक्षाणः कुमार एव बहुतरं जानाति ।

७७. नायि—(सरोषं विहस्य) कहं पच्छाक्खाणलहू मित्तावसू पुणोवि किं पि मन्तेदि ।

(मित्रावसुर्निष्क्रान्तः)

नायि—(आत्मगतम्,सास्रमात्मानं पश्यन्ती) किं मह एदिणा दोहग्गकलङ्कमइलेन अच्चन्तदुःखभाइणा अज्ज वि सरीरेण धारिदेण ताइह एव्व असोअपाअवे इमाए अदिमुत्तलदाए उब्बन्धिअ अप्पाणं वावादइस्सं । ता एवं दाव । (प्रकाशं

---

७४. समाश्वसितु समाश्वसितु भर्तृदारिका ।

७५. भो पराधीनः खल्वेषः । किमेतेनानुनीतेन । गुरुजनमस्य गत्वाभ्यर्थय ।

७७. कथं प्रत्याख्यानलघुर्मित्रावसुः पुनरपि किमपि मन्त्रयते ।

किं ममैतेन दौर्भाग्यकलङ्कमलिनेनात्यन्तदुःखभागिनाद्यापि शरीरेण धारितेन । तदिहैवाशोकपादपेऽनयातिमुक्तलतयो-

विलक्षस्मितेन) हञ्जे पेक्ख दाव मित्तावसू दूरं गदो ण वेत्ति जेण अहं वि इदो गमिस्सं ।

७८. चेटी—(कतिचित्पदानि गत्वालोक्य स्वगतम्) अण्णारिसं से हिअअं पेक्खामि। ण दाव अग्गे गमिस्सं । इह एव्व ओवारिदापेक्खामि किं एसा पडिवज्जदित्ति ।

७९. नायि—(दिशो विलोक्य पाशं पाणौ गृहीत्वा सास्रम्) भअवेदि गोरि जइ तुए इह जम्म म्मि मे ण कितो पसाओ, ता अण्णसिं पि जम्मन्तरे जधा ण ईदिसी दुक्खभाइणी होमि तधा करोहि। (कण्ठे पाशमर्पयति)

८०. चेटी—(दृष्ट्वा ससंभ्रममुपसृत्य) परित्ताअध परित्ताअध एसा भट्टिदारिआ उबबन्धिअ अप्पाणं वावादेदि ।

८१. नाय—(ससंभ्रममुपसृत्य) कासौ कासौ?

---

द्बध्यात्मानं व्यापादयिष्यामि। तदेवं तावत्। हञ्जे! प्रेक्षस्व तावन्मित्रावसुर्दूरं गतो न वेति येनाहमपीतो गमिष्यामि।

७८. अन्यादृशमस्य हृदयं प्रेक्षे। न तावदग्रे गमिष्यामि। इहैवापवारिता प्रेक्षे किमेषा प्रतिपद्यत इति ।

७९. भगवति गौरि! यदि त्वयेह जन्मनि मे न कृतः प्रसादः, (तदन्यस्मिन्नपि) जन्मान्तरे यथा नेदृशी दुःखभागिनी भवामि तथा कुरु ।

८०. परित्रायध्वं परित्रायध्वम्। एषा भर्तृदारिकोद्बध्यात्मानं व्यापादयति ।

८२. चेटी—इअं असोअपाअवे ।

८३. नाय—(सहर्षमवलोक्य) कथं सैवेयमस्मन्मनोरथभूमिः ।
(नायिकां पाणौ गृहीत्वा लतापाशमाक्षिपति)

न खलु न खलु मुग्धे ! साहसं कार्यमीदृक्
व्यपनय करमेतं पल्लवाभं लतायाः ।
कुसुममपि विचेतुं यो न मन्ये समर्थः
कलयति स कथं ते पाशमुद्ग्रन्धनाय ?॥ ११

८४. नायि—(ससाध्वसम्) हञ्जे, को उण एसो (सम्यङ्‌निरूप्य सरोषं हस्तमाक्षिपति) अये मुञ्च अग्गहत्थं। को तुमं णिवारिदुं कहं मरणेवि तुमं अब्भत्थणीओ ।

८५. नाय—

कण्ठे हारलतायोग्ये येन पाशस्त्वयार्पितः ।
गृहीतः सापराधोऽयं स कथं मुच्यते करः ? ॥ १२

८६. विदू—(चेटीमुपसृत्य) भोदि किं उण से इमस्स मरणव्यसाअस्स कारणं ।

८७. चेटी—णं एसो एव्व दे पिअवअस्सो ।

---

८२. इयमशोकपादपे ।

८४. हञ्जे ! कः पुनरेषः ? अये ! मुञ्च मुञ्चाग्रहस्तम् । कस्त्वं निवारयितुम् ? कथं मरणेऽपि त्वमभ्यर्थनीयः ?

८६. भवति ! किं पुनरस्या अस्य मरणव्यवसायस्य कारणम् ?

८७. नन्वेष एव ते प्रियवयस्यः ।

---

११. मालिनी. १२. श्लोकः.

८८. नाय—कथमहमेवास्या मरणव्यवसायकारणम्? तदेतन्नखल्व-हमवगच्छामि ।

८९. विदू—भोदि कहं विअ ।

९०. चेटी—(साकूतम्) जा सा दे पिअवअस्सेण कावि हिअअवल्लहा सिलाअले आलिहिआ ताए पक्खवादिणा एदेण पडिबादअन्तस्सवि मित्तावसुणो णाहं पडिग्गहीदेत्ति जादणिव्वेदाए एदं व्ववसिदं ।

९१. नाय—(सहर्षमात्मगतम्) कथमियमेवासौ विश्वावसोर्दुहिता मलयवती। अथवा रत्नाकरादृते कुत श्चन्द्रलेखायाः प्रसूतिः। हा कथं वञ्चितोऽस्म्यनया ।

९२. विदू—भोदि! जइ एव्वं! ता अणवरद्धो दाणीं पिअवअस्सो। एसा क्खु आलिहिदा। अहवा, जइ मम ण पत्तीअसि। तदो सअं एव्व गदुअ सिलाअळे पेक्खदु भोदि ।

(नायि—सहर्षं सलज्जं च नायकं पश्यन्ती हस्तमाकर्षति)

---

८९. भवति! कथमिव?

९०. या सा ते प्रियवयस्येन कापि हृदयवल्लभा शिलातल आलिखिता तस्यां पक्षपातिनैतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतिगृहीतेति जातनिर्वेदयैतद्व्यवसितम् ।

९२. भवति! यद्येवं तदनपराद्ध इदानीं प्रियवयस्यः। एषा खल्वालिखिता। अथवा, यदि मम न प्रत्येषि, ततः स्वयमेव गत्वा शिलातले प्रेक्षतां भवती ।

९३. नाय—(सस्मितम्) न तावन्मुञ्चामि यावन्मम हृदयवल्लभां शिलायामालिखितां न पश्यसि ।

(सर्वे चन्दनलतागृहं प्रविशन्ति)

९४. विदू—(कदलीपत्रमपनीय) भोदि, पेक्ख पेक्ख एदं से हिअअवल्लहं जणं ।

९५. नायि—(निरूप्यापवार्य च सस्मितम्) चउरिए ! अहं विअ आलिहिदा ?

९६. चेटी—(चित्राकृतिं नायिकां च निर्वर्ण्य) भट्टिदारिए किं भणासि अहं विअ आलिहिदेत्ति । ईदिसं से सारिच्छं जेण ण जाणीआदि किं दाव मणिसिलाए भट्टिदारिआए पडिबिम्बं संकन्तं आदु तुमं आलिहिदेत्ति ।

९७. नायि—(विहस्य) हञ्जे दुज्जणीकिदम्हि इमिणा मं चित्तगदं दंसअन्तेण ।

९८. विदू——भो भो णिव्वुत्तो दाणिं ते गन्धव्वो विवाहो। ता

---

९४. भवति! प्रेक्षस्व प्रेक्षस्व एतमस्य हृदयवल्लभं जनम् ।

९५. चतुरिके! अहमिवालिखिता ?

९६. भर्तृदारिके! किं भणस्यहमिवालिखितेति। ईदृशमस्याः सादृश्यं येन न ज्ञायते किं तावन्मणिशिलायां भर्तृदारिकायाः प्रतिबिम्बं संक्रान्तम् अथवा त्वमालिखितेति ।

९७. हञ्जे! दुर्जनीकृतास्म्यनेन मां चित्रगतां दर्शयता ।

९८. भो भो निर्वृत्त इदानीं ते गान्धर्वो विवाहः । तन्मुञ्च

मुञ्च दाव से अग्गहत्थं । एसा क्खु कावि तुरिदतुरिदा इदो एव्व आअच्छदि ।

(नाय—ईषत्स्मितं कृत्वा नायिकां मुञ्चति)

(ततः प्रविशति चेटी)

९९. चेटी—(सहर्षं सहसोपसृत्य) भट्टिदारिए दिट्ठिआ वड्ढसे । पडिच्छिदा तुमं भट्टिणो जीमूतवाहणस्स गुरुहिं ।

१००. विदू—(नृत्यन्) ही ही भो ! संपुण्णा मणोरथा पिअवअस्सस्स । अहवा णहि णहि, भोदीए मलअवदीए । अहवा ण एदाणं, (भोजनमभिनयन्) मम एव्व एक्कस्स बम्हणस्स ।

१०१. चेटी—(नायिकामुद्दिश्य) आणत्तह्मि जुवराअमित्तावसुणा जधा—अज्ज एव्व मलअवदीए विवाहूसवस्स मङ्गलं संवुत्तं भविस्सदि । ता लहु तं गेण्हिअ आअच्छत्ति । ता एहि गच्छम्ह ।

---

तावदस्या अग्रहस्तम् । एषा खलु कापि त्वरितत्वरिता इत एवागच्छति ।

९९. भर्तृदारिके! दिष्ट्या वर्धसे । प्रतीष्टा त्वं भर्तुर्जीमूतवाहनस्य गुरुभिः ।

१००. ही ही भोः ! संपूर्णा मनोरथाः प्रियवयस्यस्य । अथवा नहि नहि भवत्या मलयवत्याः । अथवा नैतयोः ममैवैकस्य ब्राह्मणस्य ।

१०१. आज्ञप्तास्मि युवराजमित्रावसुना, यथा अद्यैव मलयवत्या विवाहोत्सवस्य मङ्गलं संवृत्तं भविष्यति । तल्लघु तां गृहीत्वा-गच्छ इति । तदेहि गच्छावः ।

१०२. विदू—आः गदासि क्खु तुमं दासीए धीए एदं गेण्हिअ। वअस्सेण किं इध एव्व अवत्थिदव्वं।

१०३. चेटी—(विहस्य) हदास मा तुवर। तुम्हाणवि ण्हवणकं आगदं एव्व।

(नायिका सानुरागं सलज्जं च नायकं पश्यन्ती सपरिवारा निष्क्रान्ता)

१०४. (नेपथ्ये वैतालिकः पठति)

वृष्ट्या पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधानः
सद्यः सिन्दूरधूलीकृतदिवसमुखारम्भसन्ध्यातपश्रीः।
उद्गीतैरङ्गनानां सममनुरणयन्नूपुरारावहृद्यै-
रुद्दाहस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः॥ १३

१०५. विदू—(समाकर्ण्य) भो वअस्स दिट्ठिआ आअदं ण्हवणकं।

१०६. नाय—(सहर्षं) सखे! यद्येवं तत्किमिदानीमिह स्थितेन। तदागच्छ आवामपि तातं नमस्कृत्य स्नानभूमिमेव गच्छावः।

अन्योन्यप्रीतिकृतां समानरूपानुरागकुलवयसाम्।
केषाञ्चिदेव मन्ये समागमो भवति पुण्यवताम्॥ १४

(इति निष्क्रान्ताः सर्वे)

इति द्वितीयोऽङ्कः।

---

१०२. आः गतासि खलु त्वं दास्याः पुत्रि एनां गृहीत्वा। वयस्येन किमिहैवावस्थातव्यम्?

१०३. हताश! मा त्वरस्व। युष्माकमपि स्नपनकमागतमेव।

१०५. भो वयस्य! दिष्ट्या आगतं स्नपनकम्।

---

१३. स्रग्धरा. १४. आर्या.

॥ श्रीः ॥

# ॥ तृतीयोऽङ्कः ॥

(ततः प्रविशति मत्तो विचित्रविह्वलवेषश्चषकहस्तो विटः स्कन्धारोपितसुराभाण्डश्चेटश्च)

१. विटः—(सहर्षम्)

णिच्चं जो पिवइ सुरं जणस्स पिअसङ्गमं च जो कुणइ ।
मण्णे दो विअ देवा वलदेवो कामदेवो अ ॥ १

(घूर्णमानः) सहलं क्खु मह सेहरअस्स जीविअं ।

वच्छत्थलम्मि दइआ णीलुप्पलवासिआ मुहे मइरा ।
सीसम्मि अ सेहरओ णिच्चं विअ संठ्ठिदो जस्स ॥ २

(प्रस्खलन्)अरे को मं चालेदि। (सहर्षम्) अवस्सं णोमालिआ मं परिहसेदि ।

२. चेटः—भट्टक ण दाव अज्जवि आअच्छदि णोमालिआ ।

---

१. नित्यं यः पिबति सुरां जनस्य प्रियसंगमं च यः कुरुते ।
मन्ये द्वावेव देवौ बलदेवः कामदेवश्च ॥

सफलं खलु मम शेखरकस्य जीवितम् ।

वक्षःस्थले दयिता नीलोत्पलवासिता मुखे मदिरा ।
शीर्षे च शेखरको नित्यमिव संस्थितो यस्य ॥

अरे! को मां चालयति? अवश्यं नवमालिका मां परिहसति।

२. भर्तः! न तावदद्याप्यागच्छति नवमालिका ।

---

१, २. आर्या.

३. विटः—(सरोषम्) पढमपहरे एव्व मलअवदीए विवाहमङ्गलं संवुत्तं। ता कीस सा दाणिं पहादेवि ण आअच्छदि। (विचिन्त्य सहर्षम्) अहवा अज्ज इमस्सि मलअवदीविवाहमङ्गलमहूसवे सव्वो एव्व णिअपणइणीजणसहाओ सिद्धविज्जाहरलोओ कुसुमाअरुज्जाणे आवाणअसुहं अणुविस्सदित्ति तक्केमि। तहिं एव्व णोमालिआ मं अवेक्खमाणा चिट्ठदि। ता अहं पि तहिं एव्व गमिस्सं। कीदिसो णोमालिआए विणा सेहरओ। (स्खलन् परिक्रामति)

४. चेटः—एदु एदु भट्टके। एदं कुसुमाअरुज्जाणं। ता पविसदु भट्टके।

(उभौ प्रवेशं नाट्यतः)
(ततः प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषकः)

५. विदूषकः—सुदं क्खु मए अज्ज पिअवअस्सो कुसुमाकरुज्जाणं गमिस्सदित्ति। ता जाव तहिं एव्व गमिस्सं। (परिक्रम्यावलो-

---

३. प्रथमप्रहर एव मलयवत्या विवाहमङ्गलं संवृत्तम्। तत्कस्मात्सेदानीं प्रभातेऽपि नागच्छति? अथवाद्यास्मिन्मलयवतीविवाहमङ्गलमहोत्सवे सर्व एव निजप्रणयिनीजनसहायः सिद्धविद्याधरलोकः कुसुमाकरोद्यान आपानसुखमनुभविष्यतीति तर्कयामि। तत्रैव नवमालिका मामवेक्षमाणा तिष्ठति। तदहमपि तत्रैव गमिष्यामि। कीदृशो नवमालिकया विना शेखरकः।

४. एतु एतु भट्टारकः। इदं कुसुमाकरोद्यानम्। तत्प्रविशतु भट्टारकः।

५. श्रुतं खलु मया अद्य प्रियवयस्यः कुसुमाकरोद्यानं गमिष्यतीति.

क्य च) एदं कुसुमाकरुज्जाणं ता पविस्सं । (प्रविश्य भ्रमर-बाधां नाटयन्) अरे कीस उण एदे दुट्ठमहुअरा मं एव्व अभिहवन्दि । (आत्मानमाघ्राय) भोदु जाणिदं । जं तं मलवदीए बन्धुजणेण जामादुअस्स पिअवअस्सोत्ति कदुअ सबहुमाणं सुगन्धवण्णकेहिं विलित्तो ह्मि । संताणअसेहरं च मे सीसे पिनद्धं । सो क्खु एसो अच्चादरो अणत्थीभूदो। ता किं दाणिं एत्थ करिस्सं । अहवा एदेन एव्व मलअवदीए सआसादो लद्धेण रत्तसुअजुगलेण इत्थिआवेसं विहिअ उत्तरीअकदावगुण्ठणो गमिस्सं । पेक्खामि दाव किं मे दासीएपुत्ता दुट्ठमहुअरा करिस्सन्ति । (तथा करोति)

६. विटः—(निरूप्य सहर्षम्)अरे चेड (अङ्गुल्या निर्दिशन् सहासम्) एसा क्खु णोमालिआ मं पेक्खिअ अहं चिरस्स

---

तद्यावत्तत्रैव गमिष्यामि । इदं कुसुमाकरोद्यानम् तत्प्रविशामि । अरे! कस्मात्पुनरेते दुष्टमधुकरा मामेवाभिभवन्ति । भवतु ज्ञातम् । यत्तन्मलयवत्या बन्धुजनेन जामातुः प्रियवयस्य इति कृत्वा सबहुमानं सुगन्धवर्णकैर्विलिप्तोऽस्मि । संतानकशेखरश्च मम शीर्षे पिनद्धः । स खल्वेषोऽत्यादरोऽनर्थीभूतः ।तत्किमिदानीमत्र करिष्यामि । अथवा एतेनैव मलयवत्याः सकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीवेषं विधायोत्तरीयकृतावगुण्ठनो गमिष्यामि । प्रेक्षे तावत्किं मे दास्याः पुत्रा दुष्टमधुकराः करिष्यन्ति ।

६. अरे चेट ! एषा खलु नवमालिका मां प्रेक्ष्य अहं चिरस्यागत इति

आअदो त्ति कदुअ कुविदा अवगुण्ठणं करिअ अण्णदो गच्छदि । ता कण्ठे गोह्णिअ पसादेमि णं (सहसोपसृत्य विदूषकं कण्ठे गृहीत्वा मुखे ताम्बूलं दातुमिच्छति)

७. विदू—(मद्यगन्धंमूचयन्) दूरं रे दूरं (इति नासिकां पिधाय परावृत्य स्थित्वा) कहं एक्काणं दुट्ठमहुअराणं सआसादो परिब्भट्ठो दाणिं अण्णस्स दुट्ठमहुअस्स मुहे पडिदोह्मि ।

८. विटः—कहं कोवेण परम्मुहीभूदा । भोदु पाएसु पडिअ पसादेमि । (प्रणामं कुर्वन्विदूषकस्य चरणावात्मनः शिरसि कृत्वा) पसीद णोमालिए पसीद !

(ततः प्रविशति चेटी)

९. चेटी—आणत्तह्मि भट्टिदारिआए मलअवदीए जणणीए । हञ्जे णोमालिए कुसुमाकरुज्जाणं गदुअ उज्जाणवालिअं पल्लविअं भणाहि—अज्ज सविसेसं तमालवीहिअ सज्जीकरेहि । मलअवदीए सहिदेण जामादुणा तत्थ गन्तव्वं—त्ति । आणत्ता च

---

कृत्वा कुपितावगुण्ठनं कृत्वान्यतो गच्छति । तत्कण्ठे गृहीत्वा प्रसादयाम्येनाम् ।

७. दूरं रे दूरं । कथमेकेषां दुष्टमधुकराणां सकाशात्परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि ।

८. कथं कोपेन पराङ्मुखीभूता । भवतु पादयोः पतित्वा प्रसादयामि । प्रसीद नवमालिके प्रसीद ।

९. आज्ञप्तास्मि भर्तृदारिकाया मलयवत्या जनन्या । हञ्जे नवमालिके कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण—अद्य सविशेषं तमालवीथिकां सज्जीकुरु । मलयवत्या सहितेन

जामात्रा तत्र मए पल्लविआ। ता जाव रअणीविरहजणि-दुक्कण्ठं पिअवअस्सं सेहरअं अण्णेसामि। (दृष्ट्वा) एसो सेहरओ। (सरोषम्)कहं अण्णं कं पि इत्थिअं पसादेदि। ता इह ट्ठिदा एव्व जाणामि का एसेत्ति।

१०. विटः—(सहर्षम्)

हरिहरपिदामहाणं पि गव्विदो जो ण जाणए णमिदुं।
सो सेहरओ चलणेसु तुज्झ णोमालिए पडइ॥ ३

११. विदू—अरे दासीए पुत्ता मत्तबालआ कुदो एत्थ णोमालिआ।

१२. चेटी—(निरूप्य सस्मितम्) कहं अहंत्ति करिअ मदपरवसेण सेहरएण अज्जअत्तेओ पसादीअदि। ता जाव अलीअकोवं करिअ दुवेवि एदे परिहसिस्सं।

---

जामात्रा तत्र गन्तव्यमिति। आज्ञप्ता च मया पल्लविका। तद्यावद्रजनी विरहजनितोत्कण्ठं प्रियवयस्यं शेखरकमन्विष्यामि। एष शेखरकः। कथमन्यां कामपि स्त्रियं प्रसादयति। तदिह स्थितैव जानामि का एषेति।

१०. हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम्।
स शेखरकश्चरणयोस्तव नवमालिके पतति॥

११. अरे दास्याः पुत्र मत्तबालक कुतोऽत्र नवमालिका।

१२. कथमहमिति कृत्वा मदपरवशेन शेखरकेणार्यात्रेयः प्रसाद्यते। तद्यावदलीककोपं कृत्वा द्वावप्येतौ परिहसिष्यामि।

---

३. आर्या.

१३. चेटः—(चेटीं दृष्ट्वा शेखरकं हस्तेन गृहीत्वा चालयन्) भट्टक मुञ्च एदं। ण भोदि एसा णोमालिआ। एसा उण रोसारत्तेहिं लोअणेहिं पेक्खन्ती इदो एव्व आअच्छदि।

१४. चेटी—(उपसृत्य) सेहरअ का क्खु एसा पसादीअदि।

१५. विदू—(अवगुण्ठनमपनीय) अहं मन्दभाअधेआए पुत्तो।

१६. विटः—(विदूषकं निरूप्य सरोषमुत्थाय च) अरे कविल-मक्कडअ। तुमं पि मं सेहरअं पदारेसि। (मुखे चपेटां दत्वा) अरे चेडा गेण्ह एदं जाव णोमालिअं पसादेमि।

१७. चेटः—जं भट्टको आणवेदि।

१८. विटः—(विदूषकं विमुच्य चेट्याः पादयोःपतति) पसीद णोमालिए पसीद।

१९. विदू—(स्वगतम्) एसो क्खु अवक्कमिदुं अवसरो। (पला-यितुमिच्छति)

(चेटः—विदूषकं यज्ञोपवीते गृह्णाति तच्च त्रुट्यति)

---

१३. भर्तर्मुञ्चैतां। न भवत्येषा नवमालिका। एषा पुना रोषारक्ताभ्यां लोचनाभ्यां प्रेक्षमाणा इत एवागच्छति।

१४. शेखरक ! का खल्वेषा प्रसाद्यते।

१५. अहं मन्दभागधेयायाः पुत्रः।

१६. अरे कपिलमर्कट ! त्वमपि मां शेखरकं प्रतारयसि। अरे चेट! गृहाणैनं यावन्नवमालिकां प्रसादयामि।

१७. यद्भर्ताज्ञापयति।

१८. प्रसीद नवमालिके प्रसीद।

१९. एष खल्वपक्रमितुमवसरः।

२०. विटः—कहिं कहिं कविलमक्कडअ पलाअसि (तदुत्तरीयेण कण्ठे बद्ध्वापकर्षति)

२१. विदू—भोदि णोमालिए पसीद मोचेहि मं ।

२२. चेटी—(विहस्य) जइ भूमीए सीसं णिवेसिअ पाएसु मे पडसि ता मोचइस्सं ।

२३. विदू—(सरोषं सकम्पं च) भो! गन्धव्वराजमित्तो बम्हणो भविअ दासीए धीआए पाएसु पडिस्सं ।

२४. चेटी—(अङ्गुल्या तर्जयन्ती सस्मितम्) दाणिं एव्व पाडइस्सं। सेहरअ उट्ठेहि । पसण्णा क्खु दे अहं । (कण्ठे गृह्णाति) एसो उण जामादुअस्स पिअवअस्सो बम्हणो तुए खली-किदो । एदं सुणिअ कदापि भट्टा मित्तावसू कोवं करेदि । ता आदरेण सम्माणेहि एणं ।

---

२०. क्व क्व कपिलमर्कट पलायसे ?

२१. भवति नवमालिके! प्रसीद मोचय माम् ।

२२. यदि भूमौ शीर्षं निवेश्य पादयोर्मे पतसि तन्मोचयिष्यामि ।

२३. भोः! गन्धर्वराजमित्रं ब्राह्मणो भूत्वा दास्याः पुत्र्याः पादयोः पतिष्यामि ।

२४. इदानीमेव पातयिष्यामि। शेखरक! उत्तिष्ठ। प्रसन्ना खलु तेऽहम् । एष पुनर्जामातुः प्रियवयस्यो ब्राह्मणस्त्वया खली कृतः । एतच्छ्रुत्वा कदापि भर्ता मित्रावसुः कोपं करोति । तदादरेण संमानयैनम् ।

२५. विटः—जं णोमालिआ आणवेदि। (विदूषकं कण्ठे गृहीत्वा) अज्ज तुमं संबन्धिओत्ति करिअ मए परिहसिदो। (मस्तकं घूर्णयन्) किं सच्चं एव्व सेहरओ मत्तबालओ।

२६. विदू—णहि णहि।

२७. विटः—(सहर्षम्) ता किदो परिहासो। (उत्तरीयं वर्तुलीकृत्य विदूषकायासनं ददाति) इह उवविसदु संबन्धिओ।

२८. विदू—(स्वगतम्) दिट्ठिआ अवगदो विअ से मदावेगो (उपविशति)

२९. विटः—णोमालिए तुमंवि एदस्स समीवे उवविस जेण दुवेवि तुह्मे समं एव्व संमाणइस्सं।

चेटी—(विहस्योपविशति)

विटः—रे चेड सुभरिअं क्खु एदं चसकं करेहि अच्छसुराए।

चेटः—(नाट्येन चषकभरणं करोति)

---

२५. यन्नवमालिकाज्ञापयति। आर्य! त्वं संबन्धीति कृत्वा मया परिहसितः। किं सत्यमेव शेखरको मत्तबालकः?

२६. नहि नहि।

२७. तत्कृतः परिहासः। इहोपविशतु संबन्धी।

२८. दिष्ट्यापगत इवास्य मदावेगः।

२९. नवमालिके! त्वमप्येतस्य समीप उपविश येन द्वावपि युवां सममेव संमानयिष्यामि।

रे चेट! सुभरितं खल्वेतच्चषकं कुर्वच्छसुरया।

*विटः—(स्वशिरःशेखरात्पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां स्थित्वा नवमालिकाया उपनयति) णोमालिए चक्खिअ देहि एदं एदस्स ।

३०. चेटी—(सस्मितम्) जं सेहरओ भणादि। (तथा कृत्वा विटस्यार्पयति)

३१. विटः—(विदूषकाय चषकमर्पयन्) एदं णोमालिआमुहसंसग्गवासविसेसवड्ढिदरसं सेहरआदो अण्णेण केणवि अणास्सादिदपुरुव्वं। ता पिब एदं। किं दे अदोवि अवरं संमाणं करिस्सं ।

३२. विदू—(सविलक्षस्मितम)सेहरअ बह्मणो क्खु अहं ।

३३. विटः—जइ तुमं बह्मणो ता कहिं दे दाव बह्मसुत्तं ।

३४. विदू—(यज्ञोपवीतं स्वशरीरेऽदृष्ट्वा) तं क्खु इमिणा चेडेण कड्ढिअमाणस्स मे छिण्णं ।

३५. चेटी—(विहस्य) जइ एव्वं ता वेदक्खराइंवि दाव कतिचि उदाहर ।

---

* नवमालिके ! आस्वाद्य देह्येतदेतस्य ।

३०. यच्छेखरको भणति ।

३१. एतन्नवमालिकामुखसंसर्गवासविशेषवर्धितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम् । तत्पिबैतत् किं तेऽतोऽप्यपरं संमानं करिष्यामि ।

३२. शेखरक ! ब्राह्मणः खल्वहम् ।

३३. यदि त्वं ब्राह्मणस्तत् क ते तावद्ब्रह्मसूत्रम् ?

३४. तत्खल्वनेन चेटेन कृष्यमाणस्य मे छिन्नम् ।

३५. यद्येवं तद्वेदाक्षराण्यपि तावत् कतिचिदुदाहर ।

३६. विदू—भोदि इमिणा सीधुगन्धेण पिणद्धाइं मे वेदक्खराइं। अहवा किं मह भोदीए सह विवादेण एस दे बम्हणो पाएसु पडदि। (इति पादयोः पतितुमिच्छति)

३७. चेटी—(हस्ताभ्यां निवार्य)मा क्खु मा क्खु एव्वं करेदु अज्जो। (शेखरकं प्रति) सेहरअ ओसर ओसर। सच्चं क्खु बम्हणो एसो। (विदूषकस्य पादयोः पतित्वा)अज्ज ण तुए कुविदव्वं। संबन्धिआणुरूवो क्खु एसो मए परिहासो किदो।

३८. विटः—अहं वि एणं पसादेमि। (पादयोर्निपत्य) मरिसअदु मरिसअदु अज्जो मदपरवसेण जं मए अवरद्धं। जेण अहं णोमालिआए सह आवाणअं गमिस्सं।

३९. विदू—मरिसिदं मए सव्वं। गच्छह तुम्हे। जाव अहं वि पिअवअस्सं पेक्खामि।

(इति निष्क्रान्तौ विटश्चेटी च)

---

३६. भवति! अनेन सीधुगन्धेन पिनद्धानि मे वेदाक्षराणि। अथवा किं मम भवत्या सह विवादेन एष ते ब्राह्मणः पादयोः पतति।

३७. मा खलु मा खल्वेवं करोत्वार्यः। शेखरक अपसरापसर। सत्यं खलु ब्राह्मण एषः। आर्य! न त्वया कुपितव्यम्। संबन्धिकानुरूपः खल्वेष मया परिहासः कृतः।

३८. अहमप्येनं प्रसादयामि। मर्षयतु मर्षयत्वार्यो मदपरवशेन यन्मयापराद्धम्। येनाहं नवमालिकया सहापानं गमिष्यामि।

३९. मर्षितं मया सर्वम्। गच्छतं युवाम्। यावदहमपि प्रियवयस्यं प्रेक्षे।

*विदू—दिट्ठिआ अदिक्कन्तो बम्हणस्स अकालमिच्चू । ता जाव अहं वि मत्तबालअसङ्गदूसिदो इह दिग्घिकाए ण्हाइअ पेक्खामि पिअवअस्सं । (तथा कृत्वा नेपथ्याभिमुखमवलोक्य) एसो क्खु पिअवअस्सो रूविणीं विअ सअंवरलच्छीं मलअवदीं हत्थे अवलम्बिअ इदो एव्व आअच्छदि । ता जाव गदुअ से पस्सपरिवत्ती होमि ।

(ततः प्रविशति विवाहवेषालङ्कृतो नायको मलयवती विभवतश्च परिवारः)

४०. नायकः—(मलयवतीं निरूप्य)

दृष्टा दृष्टिमधो दधाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ ४

(मलयवतीं पश्यन्) प्रिये मलयवति !

हुङ्कारैर्ददता मया प्रतिवचो यन्मौनमासेवितं
यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपैस्तापिता ।

---

*दिष्ट्या अतिक्रान्तो ब्राह्मणस्याकालमृत्युः । तद्यावदहमपि मत्तबालसङ्गदूषित इह दीर्घिकायां स्नात्वा प्रेक्षे प्रियवयस्यम् । एष खलु प्रियवयस्यो रूपिणीमिव स्वयंवरलक्ष्मीं मलयवतीं हस्तेऽवलम्ब्य इत एवागच्छति । तद्यावद्गत्वास्य पार्श्वपरिवर्ती भवामि ।

---

४. शार्दूलविक्रीडितम्.

ध्यातं यत्सुबहून्यनन्यमनसा नक्तंदिनानि प्रिये
तस्यैतत्तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥ ५

४१. नायि—(अपवार्य) हञ्जे चउरिए ण केवलं दंसणीओ पिअं वि भणिदुं जाणादि ।

४२. चेटी—(विहस्य) अइ पडिवक्खवादिणि सच्चकं एव्व एदं । किं एत्थ पिअवअणं ।

४३. नाय—चतुरिके ! आदेशय मार्गं कुसुमाकरोद्यानस्य ।

४४. चेटी—एदु एदु भट्टा ।

४५. नाय—(परिक्रमन्नायिकां निर्दिश्य) स्वैरं स्वैरमागच्छतु । यतः—

खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपर-
स्ताम्यत्यूरुयुगं नितम्बभरतः काञ्च्याऽनया किं पुनः ।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरौ
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ॥ ६

४६. चेटी—एदं क्खु तं कुसुमाअरुज्जाणं । ता पविसदु भट्टा ।

(सर्वे प्रविशन्ति)

४७. नाय—(समन्तादवलोक्य) अहो नु कुसुमाकरोद्यानस्य परा श्रीः ।

---

४१. हञ्जे चतुरिके ! न केवलं दर्शनीयः प्रियमपि भणितुं जानाति ।
४२. अयि प्रतिपक्षपातिनि ! सत्यमेवैतत् । किमत्र प्रियवचनम् ?
४४. एतु एतु भर्ता ।
४६. एतत्खलु तत्कुसुमाकरोद्यानम् । तत् प्रविशतु भर्ता ।

---

५, ६. शार्दूलविक्रीडितम्

इह हि—

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपे कुट्टिमान्तान्
श्रुत्वा धारागृहाणां ध्वनिमनुतनुते ताण्डवं नीलकण्ठः ।
यन्त्रोन्मुक्तश्च वेगाच्चलति विटपिनां पूरयन्नालवाला-
नापातोत्पीडहेलाहतकुसुमरजःपिञ्जरोऽयं जलौघः ॥ ७

अपि च—

अमी गीतारम्भैर्मुखरितलतामण्डपभुवः
परागैः पुष्पाणां प्रकटपटवासव्यतिकराः ।
पिबन्तः पर्याप्तं सह सहचरीभिर्मधुरसं
समन्तादापानोत्सवमनुभवन्तीव मधुपाः ॥ ८

४८. विदू—(उपसृत्य) जेदु जेदु भवं । सोत्थि भोदीए ।

४९. नाय—वयस्य ! चिरादायातोऽसि ।

५०. विदू—भो वअस्स लहु एव्व आअदोम्हि । किं उण विवाह-मङ्गलमहूसव.मिलिदसिद्धविज्जाहरावाणअदंसणकोदूहलेण परि-ब्भमन्तो एत्तिअं वेलं विलम्बिदोम्हि । ता पिअवअस्सो वि एदं पेक्खदु ।

५१. नाय—एवं यथाह भवान (समन्तादवलोक्य) वयस्य !

---

४८. जयतु जयतु भवान् । स्वस्ति भवत्यै ।

५०. भो वयस्य ! लघ्वेवागतोऽस्मि । किं पुनर्विवाहमङ्गलमहोत्सव-मिलितसिद्धविद्याधरापानकदर्शनकौतूहलेन परिभ्रमन्नेतावतीं वेलां विलम्बितोऽस्मि । तत्प्रियवयस्योऽप्येतत् प्रेक्षताम् ।

---

७. स्रग्धरा. ८. शिखरिणी.

पश्य पश्य—

दिग्धाङ्गा हरिचन्दनेन दधतः संतानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुकाः ।
सार्धं सिद्धजनैर्मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥ ९

तदेहि वयमपि तमालवीथिकां गच्छामः ।

(सर्वे परिक्रामन्ति)

५२. विदू—एसा क्खु तमालवीहिआ । एदं सरदसंदावखेदिदं भोदीए बअणं लक्खीअदि । ता इह एव्व फलिहमणिसिलादले उपविसदु ।

५३. नाय— वयस्य ! सम्यगुपलक्षितम् ।

एतन्मुखं प्रियायाः शशिनं क्षिप्त्वा कपोलयोः कान्त्या ।
तापानुरक्तमधुना कमलं ध्रुवमीहते जेतुम् ॥ १०

(मलयवतीं हस्ते गृहीत्वा) प्रिये इहोपविशामः ।

(सर्वे उपविशन्ति)

नाय—(नायिकाया मुखमुन्नमय्य पश्यन् ) प्रिये ! वृथैव त्वमस्माभिः कुसुमाकरोद्यानकुतूहलिभिः खेदितासि । कुतः—

एतत्ते भ्रूलतोद्भासि पाटलाधरपल्लवम् ।
मुखं नन्दनमुद्यानमतोऽन्यत्केवलं वनम् ॥ ११

---

५२. एषा खलु तमालवीथिका । एतच्छरत्संतापखेदितं भवत्या वदनं लक्ष्यते । तदिहैव स्फटिकमणिशिलातल उपविशतु ।

---

९. शार्दूलविक्रीडितम्. १०. आर्या. ११. श्लोकः.

५४. चेटी—(सस्मितं विदूषकं निर्दिश्य) सुदं एतु भट्टिदारिआ कहं वण्णीआदि ।

५५. विदू—चउरिए मा एव्व गव्वमुव्वह । अह्माणं वि मज्झे दंसणीओ जणो अत्थि एव्व । केवलं मस्सरेण को वि ण वण्णेदि ।

५६. चेटी—(सस्मितम्) अज्ज अहं तुमं वण्णेमि ।

५७. विदू—(सहर्षम्) भोदि जीवाविदो ह्मि । ता करेदु भोदी पसादं । जेण एसो मं पुणो वि ण भणादि जधा तुमं ईदिसो तारिसो कविलमक्कडाआरो त्ति ।

५८. चेटी—अज्ज तुमं मए विवाहजागरणे णिद्दाअमाणो णिमीलिअक्खो सोहणो दिट्ठो । ता तह एव्व चिट्ठ जेण वण्णेमि ।

(विदू॰ तथा करोति)

---

५४. श्रुतं त्वया भर्तृदारिका कथं वर्ण्यते ।

५५. चतुरिके ! मैवं गर्वमुद्वह । अस्माकमपि मध्ये दर्शनीयो जनोऽस्त्येव केवलं मत्सरेण कोऽपि न वर्णयति ।

५६. आर्य ! अहं त्वां वर्णयामि ।

५७. भवति ! जीवितोऽस्मि । तत्करोतु भवती प्रसादम् । येनैष मां पुनरपि न भणति यथा त्वमीदृशस्तादृशः कपिलमर्कटाकार इति ।

५८. आर्य ! त्वं मया विवाहजागरणे निद्रायमाणो निमीलिताक्षः शोभनो दृष्टः । तत्तथैव तिष्ठ येन वर्णयामि ।

*चेटी—(स्वगतम्) जाव एसो णिमीलिअक्खो चिट्ठइ दाव णीलरसाणुआरिणा तमालपल्लवरसेण मुहं से कालीकरिस्सं।

(उत्थाय तमालपल्लवग्रहणं तन्निपीडनं च नाटयति ।
नायको नायिका च विदूषकं पश्यतः।)

५९. नाय—वयस्य! धन्यः खल्वसि योऽस्मासु तिष्ठत्सु त्वमेव वर्ण्यसे ।

(चेटी तमालरसेन विदूषकस्य मुखं कालीकरोति)
(नायिका नायकस्य मुखं दृष्ट्वा स्मितं करोति)

नाय—(नायिकामुखं दृष्ट्वा)
स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे ।
फलं त्वन्यत्र मुग्धाक्षि चक्षुषोर्मम पश्यतः ॥ १२

६०. विदू—चेडिए किं तुए किदं ।

६१. चेटी—णं वण्णिदोसि ।

६२. विदू—(हस्तेन मुखं प्रमृज्य हस्तं दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य) आः दासीए धीए राअउलं क्खु एदं। किं दे करिस्सं (नायकं

---

*यावदेष निमीलिताक्षस्तिष्ठति तावन्नीलरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकरिष्यामि ।

६०. चेटि! किं त्वया कृतम् ?

६१. ननु वर्णितोऽसि ।

६२. आः दास्याः पुत्रि! राजकुलं खल्वेतत्। किं ते करिष्यामि ?

---

१२. श्लोकः.

निर्दिश्य) भो तुम्हाणं पुरदो एव्व अहं दासिएधीआए खली-
किदो । ता किं मह इहाट्ठिदेण । अण्णदो गमिस्सं दाव ।
(निष्क्रामति)

६३. चेटी—सच्चं क्खु कुविदो मे अज्जअत्तेओ । जाव अणुगदुअ
पसादइस्सं । (गन्तुमिच्छति)

६४. नायि—हञ्जे चउरिए कहं मं एआइणिं उज्झिअ गच्छसि ।

६५. चेटी—( नायकमुद्दिश्य सस्मितम् ) एव्वं एआइणी चिरं
होहि (इति निष्क्रान्ता)

६६. नाय—( नायिकाया मुखं पश्यन् )

दिनकरकरामृष्टं बिभ्रद्द्युतिं परिपाटलां
दशनकिरणैः संसर्पद्भिः स्फुटीकृतकेसरम् ।
अयि मुखमिदं मुग्धे ! सत्यं समं कमलेन ते
मधु मधुकरः किंवैतास्मिन्पिबन्न विभाव्यते ॥ १३

(नायिका विहस्य मुखमन्यतो नयति)
(नायकः पुनस्तदेव पठति)
(प्रविश्य पटाक्षेपेण)

---

भो युवयोः पुरत एवाहं दास्याः पुत्र्या खलीकृतः । तत्किं
ममेह स्थितेन । अन्यतो गमिष्यामि तावत् । (निष्क्रामति)

६३. सत्यं खलु कुपितो मे आर्यात्रेयः । यावदनुगम्य प्रसादयि-
ष्यामि ।

६४. हञ्जे चतुरिके ! कथं मामेकाकिनीमुज्झित्वा गच्छसि ?

६५. एवमेकाकिनी चिरं भव ।

---

१३- हरिणो-

६७. चेटी—(सहसोपसृत्य( एसो क्खु अज्जमित्तावसू कज्जेण केण-
वि कुमारअं पेक्खिदुं आअदो ।

६८. नाय—प्रिये! गच्छ त्वमात्मनो गृहम् । अहमपि मित्रावसुं
दृष्ट्वा त्वरितमागत एव ।

(नायिका चेट्या सह निष्क्रान्ता)
(ततः प्रविशति मित्रावसुः)

६९. मित्तावसुः—

अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम् ।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः ॥ १४

अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि ।
(इत्युपसर्पति)

७०. नाय—(मित्रावसुं दृष्ट्वा) मित्रावसो! इत आस्यताम् ।

(मित्रा-उपविशति)

नाय—(निरूप्य) मित्रावसो! संरब्ध इव लक्ष्यसे ।

७१. मित्रा—कः खलु मतङ्गहतके संरम्भः?

७२. नाय—किं कृतं मतङ्गेन?

७३. मित्रा—स्वनाशाय किल युष्मदीयं राज्यं समाक्रान्तम् ।

७४. नाय—(सहर्षमात्मगतम्) अपि नाम सत्यमेतत्स्यात्?

७५. मित्रा—अतस्तदुच्छित्तय आज्ञां दातुमर्हति कुमारः । किं
बहुना—

संसर्पद्भिः समन्तात्कृतसकलवियन्मार्गयानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।

---

६७. एष खल्वार्यमित्रावसुः कार्येण केनापि कुमारं प्रेक्षितुमागतः ।

---

१४. आर्या.

एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धं चोद्वृत्तशत्रुक्षयभयविनमद्राजकं ते स्वराज्यम् ॥ १५

अथवा किं बलौघैः—

एकाकिनापि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।
अद्रेर्निपत्य हरिणेव मतङ्गजेन्द्र-
माजौ मतङ्गहतकं हतमेव विद्धि ॥ १६

७६. नाय—(कर्णौ पिधाय आत्मगतं) अहह दारुणमभिहितम् । अथवा एवं तावत् । (प्रकाशम्) मित्रावसो! कियदेतत् । बहुतरमपि बाहुशालिनि त्वयि संभाव्यते । किन्तु

स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमनुते ॥ १७

अपि च, क्लेशान्विहाय ममान्यत्र शत्रुबुद्धिरेव नास्ति । तद्यदि तेऽस्मत्प्रियं कर्तुमीप्सितं तदनुकम्प्यतामसौ क्लेशवशीकृतस्तपस्वी ।

७७. मित्रा—(सामर्षं सहासं च) कथं नानुकम्प्यत ईदृशोऽसावस्माकमुपकारी कृतज्ञश्च ?

७८. नाय—(स्वगतम्) प्रत्यग्रकोपाक्षिप्तचेतास्तावदयं न शक्यते निवर्तयितुम् । तदेवं तावत् (प्रकाशम्) मित्रावसो! उत्तिष्ठ । अभ्यन्तरमेव प्रविशावः । तत्रैव त्वां बोधयिष्यामि । संप्रति हि परिणतमहः ।

---

१५. स्रग्धरा. १६. वसन्ततिलकम् १७. आर्या.

तथा हि—

निद्रामुद्राप्रबन्धान्मधुकरमनिशं पद्मकोशादपास्य-
न्नाशापूरैककर्मप्रवणनिजकरप्रीणिताशेषविश्वः ।
दृष्टः सिद्धैः प्रयुक्तस्तुतिमुखरमुखैरस्तमप्येष यास्य-
न्नेकः श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रयासः ॥ १८

(इति निष्क्रान्ताः सर्वे)

इति तृतीयोऽङ्कः ।

---

१८. स्रग्धरा

॥ श्रीः ॥

# ॥ चतुर्थोऽङ्कः ॥

(ततः प्रविशति गृहीतरक्तवस्त्रयुगलः कञ्चुकी प्रतीहारश्च)

१. कञ्चुकी—

अन्तःपुराणां विहितव्यवस्थः
पदे पदेऽहं स्खलितानि रक्षन् ।
जरातुरः संप्रति दण्डनीत्या
सर्वं नृपस्यानुकरोमि वृत्तम् ॥ १

२. प्रतीहारः—आर्य वसुभद्र! क भवान् प्रस्थितः?

३. कञ्चु—आदिष्टोऽस्मि देव्या महाराजमित्रावसुजनन्या यथा—कञ्चुकिंस्त्वया दशरात्रं यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानि—इति। राजदुहिता मलयवती च श्वशुरकुले वर्तते। जीमूतवाहनोऽपि युवराजमित्रावसुना सह समुद्रवेलां द्रष्टुमद्य गत इति मया श्रुतम्। तन्न जाने किं राजपुत्र्याः सकाशं गच्छाम्युताहो जामातुरिति।

४. प्रती—आर्य! वरं राजपुत्र्याः सकाशं गन्तव्यम्। तत्र कदाचिदियत्यां वेलायां जामातापि प्रत्यागत एव भविष्यति।

५. कञ्चु—सुनन्द! साधूपदिष्टम्। भवता पुनः क गम्यते?

६. प्रती—अहमपि महाराजविश्वावसुना समादिष्टः यथा—सुनन्द! गच्छ मित्रावसुं ब्रूहि। अस्मिन्दीपप्रतिपदुत्सवे मलयवत्या

---

१. उपजातिः

जामातुश्चैतदुत्सवानुरूपं यत्किञ्चित्प्रदीयते। तदागत्य निरूप्यतामिति। तद्गच्छतु राजपुत्रीसकाशमार्यः। अहमपि युवराजमित्रावसोरानयनाय गच्छामि।

(इति निष्क्रान्तौ)

विष्कम्भकः।

(ततः प्रविशति जीमूतवाहनो मित्रावसुश्च)

७. नायकः—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते॥ २

८. मित्रावसुः—(ऊर्ध्वमवलोक्य) कुमार! त्वर्यतां त्वर्यताम्। समयोऽयं चलितुमम्बुराशेः।

९. नाय—(आकर्ण्य) सम्यगुपलक्षितम्।

उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमागच्छति॥ ३

१०. मित्रा—नन्वियमागतैव पश्य—

कवलितलवङ्गपल्लवकरिमकरोद्गारसुरभिणा पयसा।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति॥ ४

---

२, ३. शार्दूलविक्रीडितम्. ४. आर्या.

तदेह्यस्माज्जलप्रसरणमार्गादपक्रम्यानेनैव गिरिसानुसमीपमार्गेण परिक्रामावः ।

११. **नायकः**—(परिक्रम्य अवलोक्य च) मित्रावसो! पश्य पश्य शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयाचलसानवः ।

१२. **मित्रावसुः**—कुमार ! नैवामी मलयाचलसानवः नागानामस्थिसङ्घाताः खल्वेते ।

१३. **नाय**—(सोद्वेगम्) कष्टम्! किं निमित्तं पुनरिमे सङ्घातमृत्यवो जाताः ।

१४. **मित्रा**—कुमार! नैवामी सङ्घातमृत्यवः। श्रूयतां यथैतत्—पुरा किल स्वपक्षपवनापास्तसमस्तसागरजलस्तरसा रसातलादुद्धृत्योद्धृत्य भुजङ्गाननुदिनं समाहारयति स्म वैनतेयः ।

१५. **नाय**—(सोद्वेगम्) कष्टमतिदुष्करं कर्म करोत्यसौ। ततस्ततः-

१६. **मित्रा**—ततः सकलनागलोकविनाशशङ्किना नागराजेन वासुकिना गरुत्मानभिहितः ।

१७. **नाय**—(सादरम्) किं मां प्रथमं भक्षयेति ।

१८. **मित्रा**—नहि नहि ।

१९. **नाय**—किमन्यत् ?

२०. **मित्रा**—इदमभिहितम् गरुत्मन्! त्वदभिपातसंत्रासात्सहस्रशः स्रवन्ति भुजङ्गमाङ्गनानां गर्भाः। शिशवश्च पञ्चत्वमुपयान्ति। एवं संततिच्छेदोऽस्माकम्। भवतश्च स्वार्थहानिः। तद्यदर्थमभिपतति भवान्नागलोकं तमेकैकमनुदिनमहं समुद्रतटस्थितस्य ते प्रेषयामि।

२१. नाय—कष्टं किमेवं रक्षिता नागराजेन पन्नगाः ।

जिह्वासहस्रद्वितयस्य मध्ये नैकापि किं तादृगभूद्रसज्ञा ।
एषोऽहिरक्षार्थमहिद्विषेऽद्य दत्तो मयात्मेति यया ब्रवीति ॥ ५

ततस्ततः ।

२२. मित्रा—प्रतिपन्नं तत्पक्षिराजेन ।

इत्येकशः प्रतिदिनं विहितव्यवस्थो
यान् भक्षयत्यहिपतीनिह पक्षिराजः ।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥ ६

२३. नाय—(साश्चर्यम्)

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ७

कथमपर्यवसानेयं विपत्तिर्नागानामापतिता । (आत्मगतम्) अपि नाम शक्नोम्यहं स्वशरीरदानादेकस्यापि फणभृतः प्राणरक्षां कर्तुम् ?

(ततः प्रविशति प्रतीहारः)

२४. प्रतीहारः—आरूढोऽस्मि गिरिशिखरम् । यावन्मित्रावसुमन्विष्यामि । (परिक्रम्य) अयं मित्रावसुर्जामातुः समीपे तिष्ठति । (उपसृत्य प्रणम्य च) विजयेतां कुमारौ ।

२५. मित्रा—सुनन्द ! किंनिमित्तमिहागमनं ते ? ।

(प्रती—कर्णे कथयति)

५. इन्द्रवज्रा. ६. वसन्ततिलकम्. ७. श्लोकः.

मित्रा—कुमार ! तातो मामाह्वयति ।

२६. नाय—गम्यताम् ।

२७. मित्रा—कुमारेणापि बहुप्रत्यवायेऽस्मिन्प्रदेशे कुतूहलिना न चिरं स्थातव्यम् । (इति प्रतीहारेण सह निष्क्रान्तः)

२८. नाय—यावदहमप्यस्माद्गिरिशिखरादवतीर्य समुद्रतटमवलोकयामि । (परिक्रामति)

२९. (नेपथ्ये) हा पुत्तअ । सङ्खचूड । कहं वावादिअमाणो किल मए अज्ज तुमं पेक्खिदव्वो ।

३०. नायकः—(आकर्ण्य) अये! योषित इवार्तप्रलापः । तद्यावदुपसृत्य केयं कुतो वास्या भयमिति स्फुटीकरोमि । (परिक्रामति)

(ततः प्रविशति रुदत्या वृद्धया जनन्यानुगम्यमानः
शङ्खचूडो गोपायितवस्त्रयुगलश्च किङ्करः)

३१. वृद्धा—हा पुत्तअ सङ्खचूड । कहं वावादिअमाणो किल मए अज्ज तुमं पेक्खिदव्वो । चिबुके गृहीत्वा) इमिणा मुहचन्देण विरहिदं मज्झ हिअअं अन्धआरीभविस्सदि पाआलं वि ।

३२. शङ्खचूडः—अम्ब! किमेवमतिविक्लवतया सुतरां नः पीडयसि ?

---

२९. हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानः किल मयाद्य त्वं प्रेक्षितव्यः ।

३१. हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानः किल मयाद्य त्वं प्रेक्षितव्यः ? अनेन मुखचन्द्रेण विरहितं मम हृदयमन्धकारीभविष्यति पातालमपि ।

३३. वृद्धा—(चिरं निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती) हा पुत्तअ। कहं एद दे अदिट्ठसूरकिरणं सुउमारं सरीरं णिग्घिणहिअओ गरुडो आहारइस्सदि। (कण्ठे गृहीत्वा तारं रोदिति)

३४. शङ्ख—अम्ब! अलं परिदेवितेन। पश्य—

क्रोडीकरोति प्रथमं यदा जातमनित्यता।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः॥ ८

(गन्तुमिच्छति)

३५. वृद्धा—पुत्तअ मुहुत्तअं पि चिट्ठ। जाव दे वअणं पेक्खामि।

३६. किङ्करः—(साक्षेपम) एहि कुमार सङ्खचूड एहि। किं तुज्झ मादाए भणन्तीए। पुत्तसिणेहमोहिदा क्खु एसा ण जाणेदि लाअकज्जं।

३७. शङ्ख—अयमागच्छामि।

३८. किङ्क—(आत्मगतम्) आणीदो क्खु एसो मए वज्झसिलसमीवं। जाव एदं वज्झचिह्नं लत्तंसुअजुअलं देइअ वज्झसिलं दंसेमि।

---

३३. हा पुत्रक! कथमेतत्तेऽदृष्टसूर्यकिरणं सुकुमारं शरीरं निर्घृणहृदयो गरुड आहारयिष्यति?

३५. पुत्रक! मुहूर्तकमपि तिष्ठ। यावत्ते वदनं प्रेक्षे।

३६. एहि कुमार शङ्खचूड! एहि। किं ते मात्रा भणन्त्या। पुत्रस्नेहमोहिता खल्वेषा न जानाति राजकार्यम्।

३८. आनीतः खल्वेष मया वध्यशिलासमीपम्। यावदेनं वध्यचिह्नं रक्तांशुकयुगलं दत्वा वध्यशिलां दर्शयामि।

---

८. श्लोकः

३९. नाय—(दृष्ट्वा) अये इयमसौ योषित् । (शङ्खचूडं दृष्ट्वा नूनमनेनास्याः सुतेन भवितव्यं यदर्थमाक्रन्दति । (समन्तादवलोक्य) नखल्वस्याः किंचिद्भयकारणं पश्यामि कुतोऽस्या भयं भविष्यति । किमुपसृत्य पृच्छामि । अथवा प्रसक्त एवायमालापः । कदाचिदत एवास्याभिव्यक्तिर्भविष्यति । तद्विटपान्तरितस्तावच्छृणोमि (तथाकरोति) ।

४०. किङ्क—(सास्रं कृताञ्जलिः) कुमार सङ्खचूड, एसो सामिणो आदेसो त्ति करिअ ईदिसं णिट्ठुरं मन्तीअदि ।

४१. शङ्ख—भद्र ! कथय ।

४२. किङ्क—णाअलोअसामी वासुई दे आणवेदि ।

४३. शङ्ख—शिरस्यञ्जलिं कृत्वा सादरम्) किमाज्ञापयति स्वामी ।

४४. किङ्क—एदं रत्तंसुअजुअलं पलिहाय आलुह वज्झसिलं । जेण तुमं रत्तंसुअचिण्होबलक्खिदं गरुडो गेण्हिअ आहालं करेदि त्ति ।

४५. नाय—कष्टमयमसौ तपस्वी वासुकिना परित्यक्तो गरुत्मत आहाराय दत्तः ।

---

४०. कुमार शङ्खचूड ! एष स्वामिन आदेश इति कृत्वेदृशं निष्ठुरं मन्त्र्यते ।

४२. नागलोकस्वामी वासुकिस्त आज्ञापयति ।

४४. एतद्रक्तांशुकयुगलं परिधायारुह वध्यशिलाम् । येन त्वां रक्तांशुकचिह्नोपलक्षितं गरुडो गृहीत्वाहारं करोतीति ।

४६. किङ्क—शङ्खचूड गेण्ह एदं। (इति वस्त्रयुगलमर्पयति)

४७. शङ्ख—(सादरम्) उपनय। (इति गृहीत्वा) गृहीतः शिरसि स्वाम्यादेशः।

४८. वृद्धा—(पुत्रस्य हस्ते वाससी दृष्ट्वा सोरस्ताडम्) हा वच्छ एदं क्खु वज्जापाडसण्णिभं संभावीअदि। (इति मूर्च्छिता पतति)

४९. किङ्क—आसण्णा क्खु गरुडस्स आगमणवेला। ता लहु अवक्कमामि। (इति निष्क्रान्तः)

५०. शङ्ख— अम्ब! समाश्वसिहि समाश्वसिहि।

५१. वृद्धा— (समाश्वस्य सास्रम्) हा जाद हा पुत्त हा मणोरहसतलद्ध! हा भत्त! हा विणअसाअर! कहिं दे उण ईदिशं पुण्णिमाचन्दसरिच्छं मुहं पेक्खिस्सं। (कण्ठे गृहीत्वा रोदिति)

५२. नाय—अहो नैर्घृण्यं गरुत्मतः। अपि च—

मूढाया मुहुरश्रुसंततिमुचः कृत्वा प्रलापान्बहून्
कस्त्राता तव पुत्रकेति कृपणां दिक्षु क्षिपन्त्या दृशम्।
अङ्के मातुरवस्थितं शिशुमिमं त्यक्त्वा घृणामश्नत
श्चञ्चुर्नैव खगाधिपस्य हृदयं वज्रेण मन्ये कृतम्॥ ९

---

४६. शङ्खचूड! गृहाणेदम्।

४८. हा वत्स! एतत्खलु वज्रपातसंनिभं संभाव्यते।

४९. आसन्ना खलु गरुडस्यागमनवेला। तल्लघ्वपक्रामामि।

५१. हा जात हा पुत्र हा मनोरथशतलब्ध हा भक्त हा विनयसागर! क्व ते पुनरीदृशं पूर्णिमाचन्द्रसदृशं मुखं प्रेक्षिष्ये?

---

९. शार्दूलविक्रीडितम्.

५३. शङ्ख—(दुःखातिशयान्मातुर्हृदयस्फोटं शङ्कमानो मातरं प्रति)

यैरत्यन्तदयापरैर्न विहिता वन्ध्यार्थिनां प्रार्थना
यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थं प्रति ।
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता
मातः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ १०

(स्वहस्तेन मातुरश्रूणि मार्जयन्) अम्ब! किमिति वैक्लव्यं ते ? मातः ! समाश्वसिहि समाश्वसिहि ।

५४. वृद्धा—(सास्रम)पुत्तअ। कहं समस्ससिदव्वं। किं एक्को एव्व पुत्तओ त्ति कदुअ जादाणुकंवेग ण णिवारिदो णाअराएण वासुइणा। हा किदन्तहदअ ! कहं दाणिं तुए णिग्घिणहिअएण एव्वं अविच्छिण्णे जीअलोए मह पुत्तो ण विसुमरिदो । सव्वधा हदम्हि मन्दभाइणी ।

५५. नाय—( सकरुणम् )

आर्तं कण्ठगतप्राणं परित्यक्तं स्वबान्धवैः ।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः ॥ ११

तद्यावदुपसर्पामि ।

---

५४. पुत्रक ! कथं समाश्वसितव्यम्। किं एक एव पुत्रक इति कृत्वा जातानुकम्पेन न निवारितो नागराजेन वासुकिना । हा कृतान्तहतक ! कथमिदानीं त्वया निर्घृणहृदयेनैवमविच्छन्ने जीवलोके मम पुत्रो न विस्मृतः । सर्वथा हतास्मि मन्दभागिनी ।

---

१०. शार्दूलविक्रीडितम्. ११. श्लोकः

५६. शङ्ख—अम्ब ! संस्तम्भयात्मानम् ।

५७. वृद्धा—हापुत्तअ सङ्खचूड जदा णाअलोअपरिरक्खएण वासुइणा परिच्चतोसि तदा को दे अवरो परित्ताणं करिस्सदि जेणाहं समस्ससिमि ।

५८. नाय—(सत्वरमुपसृत्य) नन्वहमहम् ।

५९. वृद्धा—(ससंभ्रमं गरुडभ्रान्त्या स्वोत्तरीयेण पुत्रमाच्छादयन्ती नायकमुपसृत्य) विणआणन्दण खादेहि मं। अज्ज अहं दे णाअराएण आहारणिमित्तं परिकप्पिदा ।

६०. नाय—(सबाष्पम्) अहो पुत्रवात्सल्यम् ।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम् ।
अकरुणहृदयः करुणां करिष्यति भुजङ्गशत्रुरपि । १२

६१. शङ्ख—अम्ब! अलमलं त्रासेन । न खल्वयं नागशत्रुः पश्य—

महाहिमस्तिष्कविभेदमुक्त-
रक्तच्छटाचर्चितचण्डचञ्चुः ।
क्वासौ गरुत्मान् क च नाम सौम्यः
सत्त्वस्वभावाकृतिरेष साधुः ॥ १३

---

५७. हा पुत्रक शङ्खचूड ! यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि तदा कस्तेऽपरः परित्राणं करिष्यति? येनाहं समाश्वसिमि ।

५९. विनतानन्दन! खादय माम् । अद्याहं ते नागराजेनाहारनिमित्तं परिकल्पिता ।

---

१२. आर्या. १३. उपजातिः.

६२. वृद्धा—पुत्त अहं क्खु तुज्झ मरणभीदा सव्वं पि जीअलोअं गरुडमअं पेक्खामि ।

६३. नाय—अम्ब! मा भैषीः । नन्वहं विद्याधरस्तव पुत्ररक्षणार्थमेवागतः । अतस्त्वं धीरा भव ।

६४. वृद्धा—( सहर्षम् ) पुत्तअ पुणोवि एताइं अक्खराइं वण !

६५. नाय—किमनेन पुनः पुनरभिहितेन? ननु कर्मणैव सम्पादयामि ।

६६. वृद्धा—(शिरस्यञ्जलिं बद्ध्वा) पुत्तअ चिरं जीव ।

६७. नाय—

ममैतदम्बार्पय वध्यचिह्नं प्रावृत्य यद्वै विनतासुताय ।
पुत्रस्य ते जीवितरक्षणार्थं स्वदेहमाहारयितुं ददामि ॥ १४

६८. वृद्धा—(कर्णौ पिधाय) पडिहदं अमङ्गलं । जाद तुमं सङ्खचूडणिव्विसेसो एव्व पुत्तआ अहवा सङ्खचूडाओ बि अहिअअरो जो एव्व बन्धुजणपरिच्चत्तं पि मे पुत्तअं णिअसरीरदाणेण परिरक्खिदुमिच्छसि ।

---

६२. पुत्र ! अहं खलु तव मरणभीता सर्वमपि जीवलोकं गरुडमयं प्रेक्षे ।

६४. पुत्रक! पुनरप्येतान्यक्षराणि भण ।

६६. पुत्रक ! चिरं जीव ।

६८. प्रतिहतममङ्गलम । जात ! त्वं शङ्खचूडनिर्विशेष एव पुत्रकः । अथवा शङ्खचूडादप्यधिकतरो य एवं बन्धुजनपरित्यक्तमपि मे पुत्रकं निजशरीरदानेन परिरक्षितुमिच्छसि ।

---

१४. उपजातिः

६९. शङ्ख—(सविषादम्) अहो जगद्विपरीतमस्य महासत्त्वस्य चेतः । कुतः—

विश्वामित्रः श्वमांसं श्वपच इव पुराभक्षयद्यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।
पुत्रोऽयं कश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थं जहाति ॥ १५

(नायकमुद्दिश्य) भो महात्मन्! दर्शिता त्वयेयमात्मप्राणप्रदानव्यवसायनिर्व्याजा मयि दयालुता । तदलमनेन निर्बन्धेन । पश्य—

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ॥ १६

तत्किमनेन निर्बन्धेन? प्रसीद मुच्यतामयमध्यवसायः ।

७०. नाय—(शंखचूडं करे गृहीत्वा) कुमार शङ्खचूड! न मे चिराल्लब्धावसरस्यास्य परार्थसंपादनामनोरथस्यान्तरायं कर्तुमर्हसि । तदलं विकल्पेन । दीयतां मे वध्यचिह्नम् ।

७१. शङ्ख—भो महात्मन्! हे साहसिकाग्रणीः! किं वृथा प्रयासेन। न खलु शङ्खचूडः शङ्खधवलं शङ्खपालकुलं मलिनीकरिष्यति। अथानुकम्पनीया वयं तदियमस्मद्विपत्तिविक्लवाम्बा यथा न परित्यजति जीवितं तथाभ्युपायश्चिन्त्यताम् ।

७२. नाय—किमत्र चिन्त्यते? ननु चिन्तित एवोपायः। स च त्वदायत्तः ।

---

१५. स्रग्धरा. १६. श्लोकः.

७३. शङ्ख—क इव ।

७४. नाय—

म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥ १७

अयमेवाभ्युपायः । तदर्पय वध्यचिह्नम् यावदनेनात्मानमा-च्छाद्य वध्यशिलामारोहामि । त्वमपि जननीं पुरस्कृत्यास्मा-त्प्रदेशान्निवर्तस्व । कदाचिदियमालोक्य सन्निकृष्टमाघातस्थानं स्त्रीस्वभावकातरतया प्राणाञ्जह्यात् । किं न पश्यति भवा-निदं विपन्नपन्नगानेककङ्कालसङ्कुलं महाश्मशानम् । तथाहि—

चञ्चच्चञ्च्वग्रकृत्तच्युतपिशितलवग्राससंवृद्धगर्धै-
र्गृध्रैराबद्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे ।
यत्रोद्दामं भ्रमन्त्यः शमितशिखिशिखाश्रेणयोऽस्मिञ्शिवाना-
मस्रस्रोतस्यजस्रस्रुतबहुलवसावासविस्रे स्वनन्ति ॥ १८

७५. शङ्ख—कथं न पश्यामि ।

प्रतिदिनमशून्यमहिनाहारेण विनायकाहितप्रीति ।
शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥ १९

तद्गच्छ । किमेभिः सामोपन्यासैः । आसन्नः खलु गरुडागम-नसमयः (मातुरग्रतो जानुभ्यां स्थित्वा शिरोनिहिताञ्जलिः) अम्ब ! त्वमपि निवर्तस्वेदानीम् ।

---

१७. श्लोकः. १८. स्रग्धरा. १९. आर्या.

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम् ।
तस्यां तस्यां प्रियसुते माता भूयास्त्वमेव नः ॥ २०

(पादयोः पतति)

७६. वृद्धा—( सास्रम् ) हा कहं अवच्छिमं से वअणं । पुत्तअ णक्खु तमं उज्झिअ अण्णदो मे पाआ वहन्ति । ता अहं तुए एव्व सह मरिस्सं ।

७७. शङ्ख—(उत्थाय) यावदहमप्यस्मादुत्तरेणादूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि । (मात्रा सह निष्क्रान्तः)

७८. नाय—संपन्नं मेऽभिलषितम् । तत्को नामाभ्युपायः ?

(ततः प्रविशति सह वाससा कञ्चुकी)

७९. कञ्चुकी—इदं रक्तांशुकयुगलं देव्या मित्रावसुजनन्या कुमाराय प्रेषितम् । तदेतत्परिधत्तां कुमारः ।

८०. नाय—( दृष्ट्वा सहर्षमात्मगतम् ) दिष्ट्या सिद्धमभिवाञ्छितमनेनातर्कितोपनतेन रक्तांशुकयुगलेन । (प्रकाशम् )कञ्चुकिन्नुपनय ।

(कञ्चु—रक्तवसनद्वयमर्पयति)

नाय—( गृहीत्वा परिधाय स्वगतम् )सफलीभूतो मे मलयवत्या पाणिग्रहः । (प्रकाशम्) कञ्चुकिन् ! गम्यताम् । मद्वचनादभिवादनीया देवी ।

८१. कञ्चु—यदाज्ञापयति कुमारः । (इति निष्क्रान्तः)

---

७६. हा कथमपश्चिममस्य वचनम् । पुत्रक ! न खलु त्वामुज्झित्वान्यतो मे पादौ वहतः । तदहमपि त्वयैव सह मरिष्यामि ।

---

२०. श्लोकः.

८२. नाथ—

वासोयुगमिदं रक्तं प्राप्ते काले समागतम् ।
करोति महतीं प्रीतिं परार्थैकदृशो मम ॥ २१

(दिशोऽवलोक्य) यथा चायं चलितमलयाचलशिलाचयः प्रचण्डो नभस्वांस्तथा तर्कयाम्यासन्नीभूतः पक्षिराज इति । तथा हि ।

तुल्याः संवर्तकाभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां
तीरे वेगानिलोऽम्भः क्षिपति भुव इव प्लावनायाम्बुराशेः ।
कुर्वन्कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रै-
र्देहोद्योतैर्दशाशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः ॥ २२

तद्यावदसौ नागच्छेच्छङ्खचूडस्तावत्त्वरिततरामिमां वध्यशिलामारोहामि । (तथा कृत्वोपविश्य शिलास्पर्शं नाटयन्) अहो स्पर्शोऽयमस्याः—

न तथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा ।
अभिवाञ्छितार्थसिध्यै वध्यशिलेय यथाश्लिष्टा ॥ २३

अथवा किं मलयवत्या—

शयितेन मातुरङ्के विश्रब्धं शैशवे न यत्प्राप्तम् ।
लब्धं सुखं मयास्या वध्यशिलायास्तदुत्सङ्गे ॥ २४

तदयमागतो गरुत्मान् यावदात्मानमाच्छाद्य तिष्ठामि । (तथा करोति)

(ततः प्रविशति गरुडः)

---

२१. श्लोकः २२. स्रग्धरा. २३. २४. आर्या.

८३. गरुडः—

दृष्ट्वा बिम्बं हिमांशोर्भयकृतवलयां संस्मरन् शेषमूर्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।
एष प्रान्तापसर्पज्जलधरपटलैरायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिप्रासगृध्नुः क्षणेन ॥ २५

८४. नाय—(सपरितोषम्)

संरक्षता पन्नगमद्य पुण्यं मयार्जितं यत्स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात्परोपकाराय शरीरलाभः ॥ २६

८५. गरु—(नायकं निर्वर्ण्य)

अस्मिन्वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिदण्डचण्डतरया चञ्च्वाधुना वक्षसि ।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा ॥ २७

(इत्यभिपत्य नायकं गृह्णाति)

(नेपथ्ये दुन्दुभिध्वनिः पुष्पवृष्टिश्च)

गरु—(सविस्मयम्) अये! दुन्दुभिध्वनिः पुष्पवृष्टिश्च। (ऊर्ध्वमवलोक्याकर्ण्य च)

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः
स्वर्गे किं चैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ।

(विहस्य)

२५. स्रग्धरा. २६. उपजातिः. २७. शार्दूलविक्रीडितम्.

आं ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातो
मन्द्रं संवर्तकाभ्रैरिदमपि रणितं जातसंहारशङ्कैः ॥ २८

८६. नाय—(आत्मगतम्) दिष्ट्या कृतार्थोऽस्मि ।

८७. गरु—(नायकं कवलयन्)

नागानां रक्षिता भाति गुरुरेष यथा मम ।
तथा सर्पाशनाकाङ्क्षां व्यक्तमद्यापनेष्यति ॥ २९

तद्यावदेनं गृहीत्वा मलयपर्वतमारुह्य यथेष्टमाहारयामि ।

(इति जीमूतवाहनं गृहीत्वा निष्क्रान्तः)

इति चतुर्थोऽङ्कः ।

---

२८. स्रग्धरा. २९. श्लोकः.

॥ श्रीः ॥

# ॥ पञ्चमोऽङ्कः ॥

(ततः प्रविशति प्रतीहारः)

१. प्रतीहारः—

स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥ १

तथा हि । जीमूतवाहनो जलधिवेलावलोकनकुतूली निष्क्रान्तश्चिरयतीति दुःखमास्ते महाराजविश्वावसुः । तत्समादिष्टोऽस्मि तेन । यथा—सुनन्द! श्रुतं मया संनिहितगरुडप्रतिभयमुद्देशं जामाता जीमूतवाहनो गत इति । शङ्कित एवास्म्यनेन वृत्तान्तेन । तत्त्वरितं विज्ञायागच्छ किमसौ गृहमागतो न वा—इति । तद्यावत्तत्र गच्छामि । (परिक्रामन्नग्रतो विलोक्य) अये! अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गणे सहधर्मचारिण्या राजपुत्र्या वध्वा चोपास्यमानस्तिष्ठति । तथा हि—

क्षौमे भङ्गवती तरङ्गतरले फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजितः सुपयसा देव्या महापुण्यया ।
धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं
यस्यैषान्तिकवर्तिनी मलयवत्याभाति वेला यथा ॥ २

तद्यावदुपसर्पामि ।

(ततः प्रविशत्यासनस्थ पत्नीवधूसमेतो जीमूतकेतुः)

---

१. आर्या. २. शार्दूलविक्रीडितम्.

२. जीमूतकेतुः—

भुक्तानि यौवनसुखानि यशो विकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि ।
श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः ॥　　　　३

३. प्रती—(सहसोपसृत्य) जीमूतवाहनस्य—

४. जीमू—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम् ।

५. वृद्धा—पडिहदममङ्गलम् ।

६. नायिका—( स्वगतम् )वेवदि मे हिअअं इमिणा दुण्णिमित्तेण ।

७. जीमू—भद्र ! किं जीमूतवाहनस्य ?

८. प्रती—जीमूतवाहनस्य वार्तामन्वेष्टुं प्रेषितोऽस्मि युष्मदन्तिकं महाराजविश्वावसुना ।

९. जीमू—किमसन्निहितस्तत्र मे पुत्रः ?

१०. प्रती—अथ किम् ।

११. वृद्धा—( सविषादम् ) महाराअ जइ तहिं ण सण्णिहिदो ता कहिं गदो मे पुत्तओ भाविस्सदि ।

---

५. प्रतिहतममङ्गलम् ।

६. वेपते मे हृदयमनेन दुर्निमित्तेन ।

११. महाराज ! यदि तत्र न संनिहितः तत्कुत्र गतो मे पुत्रको भविष्यति ?

---

३. वसन्ततिलकम्.

१२. जीमू—नियतमस्मत्प्राणयात्रार्थं नितान्तं दूरं गतो भविष्यति।

१३. नायि—( सविषादमात्मगतम् )अहं उण अज्जउत्तं अपेक्खन्ती अण्णं एव्व किं पि आसङ्केमि।

१४. प्रती—आज्ञापयतु महाराजः किं मया स्वामिने निवेदनीयम्।

१५. जीमू—( वामाक्षिस्पन्दनं सूचयन् ) जीमूतवाहनश्चिरयतीति पर्याकुलोऽस्मि हृदयेन।

स्फुरसि किमदक्षिणेक्षण मुहुर्मुहुः कथयितुं ममानिष्टम्।
हतचक्षुरपहतं ते स्फुरितं मम पुत्रकः कुशली ॥ ४

(ऊर्ध्वमवलोक्य) अयमेव त्रिभुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुटं जीमूतवाहनस्य श्रेयः करिष्यति। ( अवलोक्य सविस्मयम् )

आलोक्यमानमतिलोचनदुःखदायि-
रक्तच्छटानिजमरीचिरुचो विमुञ्चत्।
उत्पातवाततरलीकृततारकाभ-
मेतत्पुरः पतति किं सहसा नभस्तः ॥ ५

कथं चरणयोरेव निपतितम्।

(सर्वे सविस्मयं निरूपयन्ति)

जीमू—अये ! कथं लग्नसरसमांसश्चूडामणिः। कस्य पुनरयं स्यात्।

१६. वृद्धा—( सविषादम् ) महाराअ पुत्तअस्स विअ एदं चूडारअणं !

१३. अहं पुनरार्यपुत्रमप्रेक्षमाणान्यदेव किमप्याशङ्के।

१६. महाराज ! पुत्रकस्यैवैतच्चूडारत्नम्।

४. आर्या. ५. वसन्ततिलकम्.

१७. नायि—(अपवार्य) मा एव्वं भण ।

१८. प्रती—महाराज! मैवमविज्ञाय विक्लबो भूः । अत्र हि तार्क्ष्येण भक्ष्यमाणानां नागाधिपानामनेकशो नखमुखोत्खाताः पतन्त्येते शिरोमणयः ।

१९. जीमू—देवि ! सोपपत्तिकमभिहितं सुनन्देन । कदाचिदेवमपि स्यात् ।

२०. वृद्धा—सुणन्द कदावि एत्तिआए वेलाए ससुरघरं एव्व आअदो भविस्सदि मे पुत्तो । ता गच्छ जाणिअ लहु संपादेहि ।

२१. प्रती—यदाज्ञापयति देवी । (इति निष्क्रान्तः)

२२. जीमू—देवि ! अपि नाम नागचूडामणिरयं स्यात् ?

(ततः प्रविशति रक्तवस्त्रसंवृतः शंखचूडः)

२३. शङ्खचूडः—( सास्रम् )कष्टं भोः कष्टम् । मुषितोऽस्मि दैवेन ।

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम् ।
आदाय तं नखमुखक्षतवक्षसं च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥ ६

---

१७. मैवं भण ।

२०. सुनन्द ! कदापीयत्या वेलया श्वशुरगृहमेवागतो भविष्यति मे पुत्रः । तद्गच्छ ज्ञात्वा लघु संपादय ।

---

६. वसन्ततिलकम्.

(रुदन्) हा महासत्त्व ! हा परमकारुणिक ! हा निष्कारण-बान्धव ! हा परदुःखदुःखित ! हा विपद्वारिनिधिपतित-जनोद्धरणपोत ! हा परोपकारतृणीकृतदत्तदेह ! क नु खलु गतोऽसि ? प्रयच्छ मे प्रतिवचनम् । (आत्मानमुद्दिश्य) हा हतोऽस्मि मन्दभाग्यः । हा शङ्खचूडहतक ! किं त्वया कृतम् ?

नाहित्राणात्कीर्तिरेकाहमाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा ।
दत्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक्कष्टं तेन वा वञ्चितोऽस्मि ॥ ७

तन्नाहमेवंविधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि । यावदनां रुधिरधारामनुगन्तुं प्रयतिष्ये । (भूमौ दत्तदृष्टिः परिक्रामन्)

आदावुत्पीडपृथ्वीं प्रविरलपतितस्थूलबिन्दुं ततोऽग्रे
ग्रावस्वापातशीर्णप्रसृततनुकणां कीटकीर्णां स्थलीषु ।
दुर्लक्ष्यां धातुपीठे वनतरुशिखरे स्त्याननीलस्वरूपा-
मेनां तार्क्ष्यं दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि ॥ ८

२४. वृद्धा—(ससाध्वसम्)महाराअ एसो कोवि रुदिअवअणो इदो एव्व तुरिदं आअच्छन्तो हिअअं मे आकुलीकरेदि । ता जाणीअदु दाव को एसो त्ति ।

---

२४. महाराज! एष कोऽपि रुदितवदन इत एव त्वरितमागच्छन् हृदयं मे आकुलीकरोति । तज्ज्ञायतां तावत्क एष इति ।

---

७. शालिनी. ८. स्रग्धरा.

२५. जीमू—यथाह देवी ।

२६. शङ्ख—हा त्रिभुवनैकचूडामणे ! हा परार्थदत्तदेह ! क्व मया द्रष्टव्योऽसि? मुषितोऽस्मि भो मुषितोऽस्मि । (इति क्रन्दति)

२७. जीमू—( आकर्ण्य सहर्षम् ) देवि ! मुञ्च विषादम् । अस्यायं चूडामणिर्नूनं मांसलोभात्केनापि पक्षिणा मस्तकादुत्खायानीयमानोऽस्मिन्प्रदेशे पतितः ।

२८. वृद्धा—(सहर्षं मलयवतीमालिंग्य) अविहवे धीरा होहि । ण क्खु ईदिसी आकिदी एरिसं वेहव्वदुःक्खं अणुहोदि ।

२९. नायि—( सहर्षम् )अम्ब तुम्हाणं आसिसां पभाएग । (इति पादायोः पतति)

३०. जीमू—(शंखचूडमुपसृत्य) वत्स! किं तव चूडामणिरपहृतः? ।

३१. शङ्ख—आर्य ! न ममैव त्रिभुवनस्यापि ।

३२. जीमू—कथमिव ?

३३. शङ्ख—दुःखातिभाराद्बाष्पोपरुद्धकण्ठो न शक्नोमि कथयितुम् ।

३४. जीमू—

आवेद्य ममात्मीयं पुत्र दुःखं सुदुःसहम् ।
मयि संक्रान्तमेतत्ते येन सह्यं भविष्यति ॥ ९

---

२८. अविधवे! धीरा भव । न खल्वीदृश्याकृतिरीदृशं वैधव्यदुःखमनुभवति ।

२९. अम्ब ! युष्माकमाशिषां प्रभावेन ।

---

९. श्लोकः

३५. शङ्ख—श्रूयताम् । शङ्खचूडो नाम नागः खल्वहम् । वैनतेयस्याहारार्थमवसरप्राप्तो वासुकिना प्रेषितः । किं वा विस्तरेण कदाचिदियं रुधिरधारापद्धतिः पांसुभिरवकीर्यमाणा दुर्लक्ष्यतामुपयास्यति । अतः संक्षेपतः कथयामि—

विद्याधरेण केनापि करुणाविष्टचेतसा ।
मम संरक्षिताः प्राणा दत्वात्मानं गरुत्मते ॥ १०

३६. जीमू—जीमूतवाहनात् कोऽन्य एवं परहितव्यसनी ? वत्स ! ननु स्फुटमेवोच्यनां पुत्रेण ते जीमूतवाहनेनेति । हा हतोऽस्मि मन्दभाग्यः ।

३७. वृद्धा—हा पुत्तअ किं तुए एदं किदं ।

३८. नायि—हा कहं सच्चीभूदं मे दुण्णिमित्तं ।

(सर्वे मोहं गच्छन्ति)

३९. शङ्ख—(सास्रम्) अये! नूनमेतौ पितरौ तस्य महासत्त्वस्य । कथमप्रियवादिना मयैवेमामवस्थां नीतौ । अथवा विषधरवदनाद्विषमन्तरेण किमन्यन्निष्क्रामति । अहो प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन । तत्किमधुनैवात्मानं व्यापादयामि । अथवा समाश्वासयामि तावदेतौ । तात ! समाश्वसिहि अम्ब ! समाश्वसिहि ।

(उभौ समाश्वसितः)

---

३७. हा पुत्रक ! किं त्वयैतत्कृतम् ?

३८. हा कथं सत्यीभूतं मे दुर्निमित्तम् ?

---

१०. श्लोकः

४०. वृद्धा—(मलयवतीमुद्दिश्य) वच्छे उट्ठेहि। मा रोअ अम्हेवि किं जीमूदवाहणेण विणा जीवम्ह। ता समस्सस दाव।

४१. नायि—(समाश्वस्य) हा अज्जउत्त। कहिं दाणिं मए तुमं पेक्खिदव्वो।

४२. जीमू—हा वत्स! गुरुजनशुश्रूषाभिज्ञ!

चूडामणिं चरणयोर्मम पातयता त्वया।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः॥ ११

(चूडामणिं गृहीत्वा) हा वत्स! कथमेतावन्मात्रदर्शनः संवृत्तोऽसि (हृदये दत्वा) अहह—

भक्त्यातिदूरमवनावननम्रमौलेः
शश्वत्तव प्रणमतश्चरणौ मदीयौ।
चूडामणिर्निकषणैर्मसृणोऽप्ययं हि
गाढं विघट्टयति मे हृदयं कथं नु॥ १२

४३. वृद्धा—हा पुत्त जीमूदवाहण, जस्स दे गुरुअणसुस्सूसं वज्जिअ अण्णं सुहं ण रोअदि सो कहं विअ दाणिं पिदरं उज्झिअ सग्गसुहं अणुभविदुं गदोसि।

---

४०. वत्से! उत्तिष्ठ। मा रुदिहि। वयमपि किं जीमूतवाहनेन विना जीवामः? तत्समाश्वसिहि तावत्।

४१. हा आर्यपुत्र! केदानीं मया त्वं प्रेक्षितव्यः?

४३. हा पुत्र जीमूतवाहन! यस्मै ते गुरुजनशुश्रूषां वर्जयित्वान्यत्सुखं न रोचते स कथमिवेदानीं पितरमुज्झित्वा स्वर्गसुखमनुभवितुं गतोऽसि?

---

११. श्लोकः. १२. वसन्ततिलकम्.

४४. जीमू—(सास्रम्) देवि! वयं किं जीमूतवाहनेन विनापि जीवामो येनैवं प्रलपसि।

४५. नायि—(पादयोर्निपत्य कृताञ्जलिः) ताद देहि मे अज्जउत्तस्स अंगाहरणाचिह्नं चूडारअणं जेण एदं हिअए करिअ जलणप्पवेसेण अवणेमि अत्तणो संदावदुक्खं।

४६. जीमू—अयि पतिव्रते! किमेवमाकुलासि? ननु सर्वेषामेवास्माकमयं निश्चयः।

४७. वृद्धा—महाराअ ता किं पडिवालीअदि।

४८. जीमू—देवि! न किंचित्। किन्त्वाहिताग्नेर्नान्येनाग्निना संस्कारो विहितः। अतोऽग्निहोत्रशरणादग्निनादायात्मानमुद्दीपयामः।

४९. शङ्ख—(स्वगतम्) कष्टं ममैकस्य पापस्य कृते सकलमेवेदं विद्याधरकुलमुत्सन्नम्। तदेवं तावत्। (प्रकाशम्) तात! न खल्वेवमनिश्चित्यैव युक्तं साहसमनुष्ठातुम्। विचित्राणि विधिविलसितानि। कदाचिन्नायं नाग इति विज्ञाय जीवन्तमेव जीमूतवाहनं परित्यजेन्नागशत्रुः। तदनयैव रुधिरधारया वैनतेयमनुसरामः।

५०. वृद्धा—सव्वधा देवदाणं पसाएण जीवन्तं एव्व पुत्तअं पेक्खिस्सं।

---

४५. तात! देहि मे आर्यपुत्रस्याङ्गाभरणचिह्नं चूडारत्नम्। येनैतद् हृदये कृत्वा ज्वलनप्रवेशेनापनयाम्यात्मनः संतापदुःखम्।

४७. महाराज! तत्किं प्रतिपाल्यते।

५०. सर्वथा देवतानां प्रसादेन जीवन्तमेव पुत्रकं प्रेक्षिष्ये।

५१. नायि—(स्वगतम्) दुल्लहं क्खु एदं मह मन्दभाअधेआए ।

५२. जीमू—वत्स! अवितथैषा भारती भवतु । तथापि साग्नीनामेवास्माकं युक्तमनुसर्तुम् । तत्त्वां सन्ततामनुसरतु भवान् धाराम् । वयमप्यग्निशरणादग्नीनादाय त्वरितमेवागच्छामः । (इति पत्नीवधूसमेतो निष्क्रान्तः)

५३. शङ्ख—तद्यावद्गरुडमनुसरामि । (परिक्रम्य अग्रतो निर्वर्ण्य)

कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रेः शिलाः
प्लुष्टोपान्तवनान्तरः स्वनयनज्योतिःशिखाश्रेणिभिः ।
सज्जद्वज्रकठोरघोरनखरप्रान्तावगाढावनिः
शृङ्गाग्रे मलयस्य पन्नगरिपुर्दूरादयं दृश्यते ॥ १३

(ततः प्रविशत्यासनस्थः पुरः पतितनायको गरुडः)

५४. गरुडः—(आत्मगतम्) जन्मनः प्रभृति भुजङ्गपतीनश्नता नेदृशमाश्चर्यं मया दृष्टपूर्वम् । यदयं महासत्त्वो न केवलं न व्यथते प्रत्युत प्रहृष्ट इव किमपि दृश्यते । तथा हि—

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदधे-
र्मांसोत्कर्षणजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम् ।
गात्रं यन्नविलुप्तमेष पुलकस्तत्र स्फुटो लक्ष्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥ १४

सत्कुतूहलमेव मे जनितमस्यानया धैर्यवृत्त्या । तद्भवतु न भक्षयाम्येनम् । पृच्छामि तावत्कोऽयमिति । (इत्युपरतो भक्षणात् पुरतस्तिष्ठति)

---

५१. दुर्लभं खल्वेतन्मम मन्दभागधेयायाः ।

---

१३, १४. शार्दूलविक्रीडितम्.

५५. नायकः—

शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि च ते महात्मन्
किं भक्षणात्त्वं विरतो गरुत्मन् ? ॥ १५

५६. गरु—(स्वगतम्) आश्चर्यमाश्चर्यम् । कथमयमस्यामप्यवस्थायामूर्जितमेवाभिधत्ते (प्रकाशम्) अहो महासत्त्व !

आवर्जितं मया चञ्च्वा हृदयात्तव शोणितम् ।
धैर्येणानेन च हृतं त्वया हृदयमेव मे ॥ १६

तत्कस्त्वमिति श्रोतुमिच्छामि ।

५७. नाय—एवं क्षुधाकुलो भवान्न श्रवणयोग्यः । तत्कुरुष्व तावत् प्रथमं मम मांसशोणितेन तृप्तिम् ।

५८. शङ्ख—(ससंभ्रममुपसृत्य) तार्क्ष्य तार्क्ष्य ! न खलु न खलु साहसमनुष्ठेयम् । नायं नागः । परित्यजैनम् । मां भक्षय अहं तवाहारार्थं वासुकिना प्रेषितः । (इत्युरो ददाति)

५९. नाय—(शंखचूडं पश्यन्नात्मगतम्) कथं विफलीकृतो मे मनोरथः शङ्खचूडेनागच्छता ?

६०. गरु—(उभौ निरूप्य) द्वयोरपि भवतोर्वध्यचिह्नम । कतरः खलु नाग इति नावगच्छामि ।

६१. शङ्ख—कथमस्थान एव भवतो भ्रान्तिः ?

---

१५. उपजातिः. १६. श्लोकः.

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुको
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि ।
तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्वरत्नत्विषो
नैता दुस्सहशोकफूत्कृतमरुत्फीताः फणाः पश्यसि ॥ १७

६२. गरु—(शङ्खचूडस्यफणान्वीक्ष्य नायकं पश्यन्) तत्कः खल्वयं मया व्यापादितः ?

६३. शङ्ख—विद्याधरवंशतिलको जीमूतवाहनः । कथमकारुणिकेन त्वयेदमनुष्ठितम् ?

६४. गरु—(स्वगतम्) अये! अयमसौ विद्याधरकुमारो जीमूतवाहनः ।

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि ।
दिक्कुञ्जेषु च तेषु बहुशो यस्य श्रुतं तन्मया
लोकालोकविचारिचारणगणैरुद्गीयमानं यशः ॥ १८

सर्वथा महत्यंहःपङ्के निमग्नोऽस्मि ।

६५. नाय—भोः फणिपते ! किमेवमुद्विग्नोऽसि ?

६६. शङ्ख—किमस्थानमिदमावेगस्य ?

स्वशरीरेण शरीरं तार्क्ष्यात्परिरक्षतो मदीयमिदम् ।
युक्तं नेतुं भवतः पातालतलादपि तलं माम् ॥ १९

६७. गरु—अये ! कथं करुणार्द्रचेतसानेन महात्मना मद्ग्रासगोचरपतितस्यास्य फणिनः प्राणान् रक्षितुं स्वदेह आहारार्थमुप-

१७, १८. शार्दूलविक्रीडितम्.		१९. आर्या.

नीतः। तन्महदकृत्यमेतन्मया कृतम्। किं बहुना। बोधिसत्त्व एवायं मया व्यापादितः। तदस्य महापातकस्याग्निप्रवेशादृते नान्यत्प्रायश्चित्तं पश्यामि। तत्कनु खलु वह्निमासादयामि। (अग्रतो विलोक्य) अये! अमी केचिद्गृहीताग्नय इत एवाभिवर्तन्ते। तद्यावदेतान् प्रतिपालयामि।

६८. शङ्ख—कुमार! पितरौ ते प्राप्तौ।

६९. नाय—(ससंभ्रमम) शङ्खचूड! समुपविश्योत्तरीयेणाच्छादितशरीरं कृत्वा धारय माम्। अन्यथा कदाचिदीदृगवस्थं मामालोक्य पितरौ सहसा जीवितं जह्याताम्।

(शङ्ख-पार्श्वपतितमुत्तरीयमादाय तथा करोति)
(ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः)

७०. जीमूतकेतुः—(सास्रम्) हा पुत्र जीमूतवाहन!

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः
किं रक्ष्या बहवः किमेक इति ते जाता न चिन्ता कथम्?।
तार्क्ष्यात् त्रातुमहिं स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूरिति हतं निश्शेषमेतत्कुलम्॥ २०

७१. वृद्धा—(मलयवतीमुद्दिश्य) जादे विरम मुहुत्तअं। तुह अविरदास्सुधाराहिं विज्जालो होदि अग्गी। ता मा रुद।

(सर्वे परिक्रामन्ति)

---

७१. जाते! विरम मुहूर्तम्। तवाविरताश्रुधाराभिर्विज्वालो भवत्यग्निः। तन्मा रुदिहि।

---

२०. शार्दूलविक्रीडितम्.

७२. जीमू—हा पुत्र जीमूतवाहन !

७३. गरु—(श्रुत्वा)अये! कोऽयं हा पुत्र जीमूतवाहनेति ब्रवीति ? तत्सुव्यक्तमयमस्य पिता। तत्कृतमेतदीयेनाग्निना। न शक्नोम्यस्य पुत्रघातलज्जया मुखं दर्शयितुम्। अथवा किमभिहेतोः पर्याकुलोऽस्मि। तटस्थ एवास्मि जलनिधेः। तद्याव-दिदानीम्।

ज्वालाभङ्गैस्त्रिलोकीग्रसनरसलसत्कालजिह्वाग्रकल्पैः
सर्पद्भिः सप्तहस्तैस्तृणमिव कबलीकर्तुमीशे समुद्रान्।
स्वैरेवोत्पातवातप्रसरपटुतरैर्धुक्षिते पक्षवातै-
रस्मिन्कल्पावसानज्वलनभयकरे बाडवाग्नौ पतामि ॥ २१

(इत्युत्थातुमिच्छति)

७४. नाय— भो पतगराज ! अलमनेनाध्यवसायेन। नायं प्रतीकारोऽस्य पाप्मनः।

७५. गरु—(जानुभ्यां स्थित्वा कृताञ्जलिः) भो महात्मन् ! कस्तर्हि कथ्यताम्।

७६. नाय—प्रतिपालय क्षणमेकम्। पितरौ मे प्राप्तौ। यावदेतौ प्रणमामि।

७७. गरु—एवं क्रियताम्।

७८. जीमू—(दृष्ट्वा सहर्षम्)देवि ! दिष्ट्या वर्धसे। अयं वत्सो जीमूतवाहनो न केवलं ध्रियते प्रत्युत कृताञ्जलिना गरुडेन शिष्येणेव पर्युपास्यमानस्तिष्ठति।

---

२१. स्रग्धरा.

७९. वृद्धा—( सहर्षम् ) महाराअ किदत्थम्हि । अक्खदसरीरस्स पुत्तअस्स मुहं पेक्खिस्सं ।

८०. नायि—जं सच्चकं अज्जउत्तं पेत्तक्खन्तीए वि झत्ति अदिपिअं त्तिकरिअ ण पत्ताअअदि मे हिअअं ।

८१. जीमू—(उपसृत्य) वत्स ! एह्येहि परिष्वजस्व माम् ।

(नाय—उत्थातुमिच्छन् पतितोत्तरीयो मूर्च्छति)

८२. शङ्ख—कुमार ! समाश्वसिहि समाश्वसिहि ।

८३. जीमू—हा वत्स ! कथं मां दृष्ट्वापि परित्यज्य गतोऽसि ?

८४. वृद्धा—हा पुत्तअ । कहं वाआमेत्तकेण वि तुएन संभाविदम्हि ।

८५. नायि—हा अज्जउत्त । कहं गुरुअणो वि तुए उवेक्खिदो ।

(सर्वे मोहं गच्छन्ति)

८६. शङ्ख—आः शङ्खचूडहतक ! परात्मरक्षितजीवित ! कथं गर्भस्थ एव न विपन्नोऽसि । येनैवं क्षणे क्षणे मरणातिगं दुःखमनुभवसि ।

८७. गरु—सर्वमिदं मम नृशंसस्यासमीक्षयकारिताया विजृम्भितम् । तदेवं तावत्करोमि । (पक्षाभ्यां वीजयन् ) भो महात्मन् ! समाश्वसिहि समाश्वसिहि ।

---

७९. महाराज! कृतार्थास्मि । अक्षतशरीरस्य पुत्रकस्य मुखं प्रेक्षिष्ये ।

८०. यत्सत्यमार्यपुत्रं प्रेक्षमाणाया अपि झटित्यतिप्रियमिति कृत्वा न प्रत्येति मे हृदयम् ।

८४. हा पुत्रक ! कथं वाङ्मात्रेणापि त्वया न संभावितास्मि ।

८५. हा आर्यपुत्र ! कथं गुरुजनोऽपि त्वयोपेक्षितः ?

८८. नाय—शङ्खचूड ! समाश्वासय गुरून् ।

८९. शङ्ख—तात! समाश्वसिहि । मातः! समाश्वसिहि । समाश्वसितो जीमूतवाहनः । किं न पश्यथ युष्माकमेव समाश्वासनार्थं प्रत्युत्थितोपविष्टस्तिष्ठति ।

(उभौ समाश्वसितः)

९०. वृद्धा—पुत्त कहं पेक्खन्ताणं एव्व अम्हाणं किदन्तहदकेण अवहरीअसि ।

९१. जीमू—देवि! मैवममङ्गल्यवादिनी भव । ध्रियत एवायुष्मान् । तद्वधूः समाश्वास्यताम् ।

९२. वृद्धा—(मुखं वस्त्रेणावृत्य रुदती) पडिहदममङ्गलं । ण रोदिस्सं । (मलयवतीमुद्दिश्य) जादे समस्सस समस्सस । उट्ठेहि उट्ठेहि । वरं एत्तिअं वेलं तुमं भत्तुणो मुहं पेक्ख ।

९३. नायि—(समाश्वस्य) हा अज्जउत्त ।

९४. वृद्धा—(मलयवत्या मुखं पाणिना परिमृज्य) सोभाग्गवदी होहि । पडिहदं विग्घं ।

९५. जीमू—(सास्रमात्मगतम्)

---

९०. पुत्र ! कथं प्रेक्षमाणानामेवास्माकं कृतान्तहतकेनापह्रियसे ? ।

९२. प्रतिहतममङ्गलम् । न रोदिष्यामि । जाते! समाश्वसहि समाश्वसिहि । उत्तिष्ठोत्तिष्ठ । वरमियत्यां वेलायां त्वं भर्तुर्मुखं प्रेक्षस्व ।

९३. हा आर्यपुत्र!

९४. सौभाग्यवती भव । प्रतिहतो विघ्नः ।

विलुप्तशेपाङ्गतया प्रयातान्
निराश्रयत्वादिव कण्ठदेशम् ।
प्राणांस्त्यजन्तं तनयं निरीक्ष्य
कथं न पापः शतधा व्रजामि ॥ २२

९६. नायि—हा अज्जउत्त । अदिदुक्खभाइणी क्खु अहं जा ईदिसं वि अज्जउत्तं पेक्खन्ती अज्ज वि जीविदं ण परिच्चजामि ।

९७. वृद्धा—(नायकस्याङ्गानि स्पृशन्ती गरुडमुद्दिश्य) हा णिसंस कहं दाणिं तुए एदं आहरणाणं वि किदसोहं एव्व एदावत्थं पुत्तअस्स मे शरीरं किदं ।

९८. नाय—अम्ब! मा मैवम् । किमनेन कृतम् । ननु पूर्वमप्येतदीदृशमेव परमार्थतः । पश्य—

मेदोऽस्थिमांसमज्जासृक्संघातेऽस्मिंस्त्वचावृते ।
शरीरे खलु का शोभा सदा बीभत्सदर्शने ॥ २३

९९. गरु—भो महात्मन् ! नरकानलज्वालावलीढमिवात्मानं मन्यमानो दुःखमनुभवामि । तदुपदिश्यतां येनाहं मुच्येयास्मादेनसः ।

१००. नाय—अनुजानातु मां तातः यावदस्य पापस्य प्रतिपक्षमुपदिशामि ।

---

९६. हा आर्यपुत्र ! अतिदुःखभागिनी खल्वहम् । येदृशमप्यार्यपुत्रं प्रेक्षमाणाद्यापि जीवितं न परित्यजामि ।

९७. हा नृशंस ! कथमिदानीं त्वयैतदाभरणानामपि कृतशोभमेवैतदवस्थं पुत्रकस्य मे शरीरं कृतम् ।

---

२२. उपजातिः २३. श्लोकः.

१०१. जीमू—वत्स ! एवं क्रियताम् ।

१०२. नाय—वैनतेय ! श्रूयताम् !

१०३. गरु—(जानुभ्यां स्थित्वा शिरसि निहिताञ्जलिः)आज्ञापयतु भवान् ।

१०४. नाय—शृणु—

नित्यं प्राणाभिघातात्प्रतिविरम कुरु प्राक्कृतस्यानुतापं
यत्नात्पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम् ।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
दुर्गाधे वारिपूरे लवणपलमिव क्षिप्तमन्तर्ह्रदस्य ॥ २४

१०५. गरु—यदाज्ञापयति भवान्—

अज्ञाननिद्रया सुप्तो भवता प्रतिबोधितः ।
सर्वप्राणिवधादेष विरतोऽद्यप्रभृत्यहम् ॥ २५

सम्प्रति हि—

क्वचिद्दीपाकारः पुलिनविपुलैर्भोगनिवहैः
कृतावर्तभ्रान्तिर्वलयितशरीरः क्वचिदपि ।
व्रजन्कूलात्कूलं क्वचिदपि च सेतुप्रतिसमः
समाजो नागानां विहरतु महोदन्वति सुखम् ॥ २६

अपि च—

स्रस्तानापादलम्बान् घनतिमिरनिभान्केशपाशान्वहन्त्यः
सिन्दूरेणेव दिग्धैः प्रथमरविकरस्पर्शताम्रैः कपोलैः ।
अस्मिन्नायासिताङ्ग्योऽप्यवगणितरुजः कानने चन्दनानां
नित्यं गायन्तु रागादुरगयुवतयः कीर्तिमेतां तवैव ॥ २७

---

२३. २७. स्रग्धरा. २५. श्लोकः. २६. शिखरिणी.

१०६. नाय—साधु महात्मन्! साधु। अनुमोदामहे वयम्। सर्वथा दृढसमाधिर्भव। (शंखचूडं निर्दिश्य) शङ्खचूड ! त्वयापि स्वगृहमिदानीं गम्यताम्।

(शङ्ख—निश्वस्याधोमुखस्तिष्ठति)

नाय—(शंखचूडं पश्यन्) शङ्खचूड! सत्वरं गच्छ। शोकाकुलां जननीं पश्य—

उत्प्रेक्षमाणा त्वां तार्क्ष्यचञ्चुकोटिनिपातितम्।
त्वद्दुःखदुःखिता नूनमास्ते सा जननी तव ॥ २८

१०७. वृद्धा—(सास्रम्) धण्णा क्खु सा जणणी जा गरुडमुहपडिदस्स अक्खदसरीरस्स एव्व पुत्तअस्स मुहं पेक्खिस्सदि।

१०८. शङ्ख—अम्ब! सत्यमेवैतत् यदि कुमारः स्वस्थो भविष्यति।

१०९. नाय—(वेदनां नाटयन्) अहह। परार्थसंपादनरसाक्षेपादेतावतीं वेलां न वेदिताः संप्रति तु मां बाधितुमारब्धा मर्मच्छेदिन्यो वेदनाः। (मरणावस्थां नाटयति)

११०. जीमू—(ससंभ्रमम्) हा वत्स वत्स! किमेवं करोषि?

१११. वृद्धा—हा किं णु क्खु एवं वददि। (सोरस्ताडम्) परित्ताअह परित्ताअह। एसो क्खु मे पुत्तओ विवज्जइ।

---

१०७. धन्या खलु सा जननी या गरुडमुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते।

१११. हा किं नु खल्वेवं वदति। परित्रायध्वं परित्रायध्वम्। एष खलु मे पुत्रको विपद्यते।

---

२८. श्लोकः

११२. नायि—हा अज्जउत्त । मं परिच्चइअ गमणं ते ण जुत्तं ।

११३. नाय—(अञ्जलिं कर्तुमिच्छन् )शङ्खचूड ! समानय मे हस्तौ ।

११४. शङ्ख—(तथा कुर्वन् ) कष्टमनाथीकृतं जगत् ।

११५. नाय—(किंचिदुन्मीलिताक्षः पितरौ पश्यन् )तात अम्ब अयं मे पश्चिमः प्रणामः । यतः—

गात्राण्यमूनि न वहन्ति सचेतनत्वं
 श्रोत्रं स्फुटाक्षरपदां न शृणोति वाचम् ।
कष्टं निमीलितमिदं सहसैव चक्षु-
 र्हा तात यान्ति विवशस्य ममासवोऽमी ॥ २९

अथवा किमनेन प्रलपितेन ('संरक्षता पन्नगमद्यपुण्यं' (४-२६) इत्यादिं पूर्वोक्तं श्लोकं पठित्वा पतति)

११६. वृद्धा—हा पुत्त । हा वच्छ । हा गुरुजणवच्छल । कहिं गदोसि । देहि मे पडिवअणं । हा लोअणाणन्द । हा जीमूदवाहण । कहं पुणो दे दंसणं ।

११७. जीमू—हा पुत्र जीमूतवाहन ! हा निखिलजनवत्सल ! हा सर्वगुणनिधे ! कासि ? देहि मे प्रतिवचनम् (हस्तमुत्क्षिप्य) कष्टं भोः कष्टम् ।

---

११२. हा आर्यपुत्र । मां परित्यज्य गमनं ते न युक्तम् ।

११६. हा पुत्र ! हा वत्स ! हा गुरुजनवत्सल ! कुत्र गतोऽसि ? देहि मे प्रतिवचनम् ! हा लोचनानन्द ! हा जीमूतवाहन ! कथं पुनस्ते दर्शनम् ?

---

२९. वसन्ततिलकम्.

निराधारं धैर्यं कमिव शरणं यातु विनयः
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता ।
हतं सत्यं सत्यं व्रजतु च कृपा क्वाद्य कृपणा
जगज्जातं शून्यं त्वयि तनय लोकान्तरगते ॥ ३०

११८. नायि—हा अज्जउत्त । कहं मं परिच्चइअ गदोसि । अइ णिग्घिणहिअए वज्जकठिणदेहे मलअवदि । पाणनाधं विणा कधं अज्ज वि जीवसि ।

११९. शङ्ख—हा निष्कारणपरोपकारव्रत ! केमं प्राणेभ्योऽपि वल्लभतरं जनं विहाय गम्यते ? तदवश्यमेव भवन्तमन्वेति शङ्खचूडः ।

१२०. गरु—कष्टमुपरतोऽयं महात्मा । तत्किमिदानीं करोमि?

१२१. वृद्धा—(सास्रमूर्ध्वमवलोक्य) भअवन्तो लोअवाला । कहं ण अमिदेण सिञ्चिअ एदं मे पुत्तअं जीवावेह ।

१२२. गरु—( सहर्षमात्मगतम् )अये ! अमृतसंकीर्तनात्साधु स्मारितम्। मन्ये परिमृष्टमयशः । तद्यावत् त्रिदशपतिमभ्यर्थ्य

---

११८. हा आर्यपुत्र ! कथं मां परित्यज्य गतोऽसि ? अयि निर्घृणहृदये । वज्रकठिनदेहे । मलयवति ! प्राणनाथं विना कथमद्यापि जीवसि ?

१२१. भगवन्तो लोकपालाः । कथं नामृतेन सिक्त्वेमं मे पुत्रकं जीवयथ ।

---

३०. शिखरिणी

तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनं यावदेतानपि पूर्वभक्षितानस्थिशेषानुरगपतीन् प्रत्युज्जीवयामि । अथ प्रार्थितो न दास्यत्यसौ ततोऽहं ।

पक्षोत्क्षिप्ताम्बुनाथः पटुतरपतनप्रेर्यमाणैः समीरै-
र्नेत्रार्चिःप्लोषमूर्च्छाविधुरविनिपतत्सानलद्वादशार्कः ।
चञ्च्वा सञ्चूर्ण्य शक्राशनिधनदगदाप्रेतलोकेशदण्डा-
नाजौ निर्जित्य देवान् क्षणममृतमयीं वृष्टिमभ्युत्सृजामि ॥

तदयं गतोऽस्मि। (इति साटोपं परिक्रम्य निष्क्रान्तः)

१२३. जीमू—वत्स शङ्खचूड ! किमद्यापि प्रतीक्ष्यते। समाहृत्य दारूणि पुत्रस्य मे विरचय चिताग्निं येन वयमप्यनेनैव सह गच्छामः ।

१२४. वृद्धा—पुत्त शङ्खचूड। लहु सज्जेहि। अम्हेहिं विणा भाउणा दे दुक्खं भविस्सदि ।

१२५. शङ्ख—(सास्रम्) यदाज्ञापयन्ति गुरवः। नन्वग्रग एवाहं युष्माकम्। (उत्थाय चितारचनां कृत्वा) तात अम्ब सज्जी-कृतेयं चिता ।

१२६. जीमू—कष्टं भोः कष्टम् ।

---

१२४. पुत्र शङ्खचूड ! लघु सज्ज । अस्माभिर्विना भ्रातुस्ते दुःखं भविष्यति ।

---

३१. स्रग्धरा.

उष्णीषः स्फुट एव मूर्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्धते ।
चक्राङ्कौ च करौ तथापि हि कथं हा वत्स मे दुष्कृतै-
स्त्वं विद्याधरचक्रवर्तिपदवीमप्राप्य किं गच्छसि ॥ ३२

देवि ! किमपरं रुद्यते । तदुत्तिष्ठ चितायामारोहामः ।

(सर्वे उत्तिष्ठन्ति)

१२७. नायि—(बद्धाञ्जलिरूर्ध्वं पश्यन्ती) भअवदि गोरि । तुए आणत्तं जहा—विज्जाहरचक्कवत्ती भत्ता ते भविस्सदि—त्ति । ता कहं मम मन्दभाग्गाए किदे तुमं अलीअवअणा संवुत्ता ।

(ततः प्रविशति ससंभ्रमा गौरी)

१२८. गौरी—महाराज जीमूतकेतो ! न खलु साहसमनुष्ठातव्यम् ।

१२९. जीमू—अये ! कथममोघदर्शना गौरी ।

१३०. गौरी—(मलयवतीमुद्दिश्य) वत्से ! कथमहमलीकवादिनी भवेयम् । (नायकमुपसृत्य कमण्डलूदकेनाभ्युक्ष्य)

निजेन जीवितेनापि जगतामुपकारिणः ।
परितुष्टास्मि ते वत्स ! जाव जीमूतवाहन ॥ ३३

---

१२७. भगवति गौरि ! त्वयाज्ञप्तम् यथा—विद्याधरचक्रवर्ती भर्ता ते भविष्यति—इति । तत्कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता ।

---

३२. शार्दूलविक्रीडितम्. ३३. श्लोकः.

(नाय—उत्तिष्ठति)

१३१. जीमू—सहर्षम्) देवि! दिष्ट्या वर्धसे। प्रत्युज्जीवितो वत्सः।

१३२. वृद्धा—भअवदीए गौरीए पसादेण।

१३३. नाय—(गौरीं दृष्ट्वा बद्धाञ्जलिः) अये! कथममोघदर्शना भगवती।

अभिलषिताधिकवरदे प्रणिपतितजनार्तिहारिणि शरण्ये।
चरणौ नमाम्यहं ते विद्याधरवन्दिते गौरि॥ ३४

(इति गौर्याः पादयोः पतति)

(सर्वे ऊर्ध्वं पश्यन्ति)

१३४. जीमू—अये! कथमनभ्रा वृष्टिः। भगवति? किमेतत्?

१३५. गौरी—राजन् जीमूतकेतो! जीमूतवाहनं प्रत्युज्जीवयितुमेतांश्चास्थिशेषानुरगपतीन् समुपजातपश्चात्तापेन पक्षिपतिना गरुडेन देवलोकादियममृतवृष्टिः पातिता। (अङ्गुल्या निर्दिश्य) किं न पश्यति भवान्—

संप्राप्ताखण्डदेहाः स्फुटमणिकिरणैर्भासुरैरुत्तमाङ्गै-
र्जिह्वाकोटिद्वयेन क्षितिममृतरसास्वादलोभाल्लिहन्तः।
संप्रत्याबद्धवेगा मलयगिरिसरिद्वारिपूरा इवैते
वक्रैः प्रस्थानमार्गैर्विषधरपतयस्तोयराशिं विशन्ति॥ ३५

---

१३२. भगवत्या गौर्याः प्रसादेन।

---

३४. आर्या ३५. स्रग्धरा

(नायकमुद्दिश्य) वत्स जीमूतवाहन! न त्वं केवलं जीवित-दानमात्रस्यैव योग्यः। तदयमपरस्ते प्रसादः—

हंसांसाहृतहेमपङ्कजरजःसंपर्कपङ्कोक्षितै-
 रुत्पन्नैर्मम मानसादुपनतैस्तोयैर्महापावनैः।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेषाभिषिच्य स्वयं
 त्वां विद्याधरचक्रवर्तिनमहं प्रीत्या करोमि क्षणात्॥

अपि च।

अग्रेसरीभवतु काञ्चनचक्ररत्न-
 मेष द्विपश्च धवलैर्दशनैश्चतुर्भिः।
श्यामो हरिर्मलयवत्यपि चेत्यमूनि
 रत्नानि ते समवलोकय चक्रवर्तिन्॥ ३७

अपि च आलोक्यन्ताममी शारदशशाङ्कधवलवालव्यजनहस्ता मणिमरीचिरचितेन्द्रचापभक्तयो भक्तिनमितपूर्वकायाः प्रण-मन्ति नमन्ति च मतङ्गहतकादयो विद्याधरपतयः। तदुच्यतां किं ते भूयः प्रियमुपकरोमि—

१३६. नाय—अतः परमपि प्रियमस्ति।

त्रातोऽयं शङ्खचूडः पतगपतिभयाद्वैनतेयो विनीत-
स्तेन प्राग्भक्षिता ये विषधरपतयो जीवितास्तेऽपि सर्वे।
मत्प्राणाप्त्या च मुक्ता न गुरुभिरसवश्चक्रवर्तित्वमाप्तं
साक्षात्त्वं देवि दृष्टा प्रियमपरमतः किं पुनः प्रार्थ्यते यत्॥

---

३६. शार्दूलविक्रीडितम्. ३७. वसन्ततिलकम्. ३८. स्रग्धरा.

तथापीदमस्तु भरतवाक्यम्—

वृष्टिं हृष्टशिखण्डिताण्डवकृते मुञ्चन्तु कालेऽम्बुदाः
कुर्वन्तु प्रतिरूढसन्ततहरिच्छस्योत्तरीयां क्षितिम् ।
चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसै-
र्मोदन्तां सततं च बान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥ ३९

(इति निष्क्रान्ताः सर्वे)

॥ इति पञ्चमोऽङ्कः ॥

समाप्तं चेदं नागानन्दं नाम नाटकम् ।

---

३९. शार्दूलविक्रीडितम्.

Printed at the Vavilla Press, Madras:—1949.

## ॥ नागानन्दस्थपद्यानामनुक्रमणी ॥

# NÂGÂNANDA

## PROLOGUE.

1. Whom art thou thinking of under the pretence of contemplation? Open (thine) eyes just for an instant, and look (at us) who are tormented with the shafts of the bodiless one (Cupid). Saviour as thou art, thou dost not protect (us). Thou art one that makes a pretence to kindness. Where can there be another person more cruel than thou art? May Buddha, the Jina (one who withstood all temptations), who is thus enviously addressed by Mara's nymphs, protect you. (1)

Further,

May Buddha (the lord of the sages) protect you who, while absorbed in meditation, was beheld with wonder to be unmoved from his posture of *yoga* by Cupid with his drawn bow, by the heroes of Mara dancing in unison, to (the accompaniment of) the loud-sounding drums beaten by them, by the celestial damsels with their eyes wantonly playing (on him) as they alternately frowned and trembled, yawned and smiled, by the Siddhas with their heads bent in reverence, and by Indra with the hair of his body standing erect in wonder. (2)

(*At the end of the Benediction*)

2. **Manager**—Why too much (of description)? I have been respectfully invited and just told at this Indra festival by the assemblage of kings come from countries in

various quarters, and dependent on the lotus-like feet of king Sri Harsha-deva :—" We have heard it said that a Nataka, *Nāgānanda* (the Joy of the Serpents) by name, adorned with an original arrangement of plot, and recounting the story of the Emperor of Vidyadharas (Jimutavahana), has been composed by our lord, Sriharsha-deva, but we have not seen it represented (on the stage). So, out of respect for that same monarch who gladdens the hearts of all people, and with a view to oblige us, you must enact it properly on the stage." I shall therefore, make the necessary arrangements in the tiring-room now and act as desired (by the assemblage of kings). (*Advancing and looking*) I am sure that the minds of the whole audience have been won by me. For,—

Sri Harsha is (himself) an accomplished poet; this audience too is one that can appreciate merit; the story of the king of the Siddhas (Jimutavahana) is attractive to the world; and we are experts in acting. Each of these circumstances would, by itself, lead to the attainment of the desired object; how much more then would the combination of all these excellences, brought about by the accumulation of my good fortune? (3)

I shall, therefore, go home, call my lady and sing with her. (*Advancing and looking towards the tiring-room*). This is our house; I shall enter. (*Entering*) Lady, come hither.

(*Enter*).

3. **Actress**—(*With tears*) My Lord, here I am, a miserable creature. Let my lord command (and tell me) what orders should be obeyed (by me).

4. **Manager**—(*Observing*) Lady, while Nagananda, (the Joy of Serpents) is to be enacted, how is it that you weep without cause?

5. **Actress**—My Lord, how can I help not weeping? For, (your) father, disgusted (with the world) on account of his old age and judging in his heart that you are now fit to bear the burden of the family, has gone to the penance-grove with his lady.

6. **Manager**—(*With grief*) What! Have my parents gone to the penance-grove, leaving me (behind)? What is fit to be done now? (*Reflecting*) Well, how can I stay at home giving up the pleasure of serving my revered parents?

Abandoning my hereditary wealth, I shall also go to the forest to render service to my parents, as this Jimutavahana has done. (4)

(*Exeunt both.*)

---

## ACT I

(*Enter the Hero and the Vidushaka.*)

7. **Hero**—(*With dejection*) Friend Atreya!

I know that it is the abode of desire (passion); nor am I ignorant (of the fact) that it is perishable. Who, indeed, on earth does not know that it is opposed to considerations of what should be and what should not be done. Thus this Youth, though (in itself) blame-worthy when under the control of the senses, is really to be desired if it can thus pass away for me, serving my parents with devotion. (5)

8. **Vidushaka**—(*Angrily*) Friend! you are really wearied, undergoing all this while this kind of misery of a forest life for the sake of these two living-dead (persons). Be pleased, therefore, to withdraw now at least from the worry of attending on your parents, and enjoy the pleasures of royalty, that charm by the enjoyment of whatever is wished for.

9. **Hero**—Friend, you have not spoken well:—For:

Does one shine so well on a throne as (he does) while standing before (one's) father? Is there such a pleasure in an assemblage of kings as (is found) in the shampooing of the feet of one's sire? Is there such satisfaction in the enjoyment of the three worlds as is found in (partaking of) what is left by one's father? A kingdom is really a trouble to him who has abandoned his father. Is there any virtue in it? (6)

10. **Vidu**—(*To himself*) How wonderful is his delight in attending upon his revered parents! (*Reflecting*) Well, I shall say this also. (*Aloud*) I did not say so merely with reference, my friend, to the pleasures of royalty; there is, indeed, something else to be done.

11. **Hero**—(*Smiling*) I have indeed done, my friend, what should be done. Behold!

My subjects have been put in the right path; virtuous people have been well established; (my) kinsmen have been made equal to me; and the kingdom has been (well) protected. To the needy has also been given the *Kalpa* tree, that yields more than what is desired. Tell me, friend, what has yet to be done that is in your mind? (7)

12. **Vidu**—Oh friend, your opponent is the vile Matanga who is very daring. While he is near at hand, it does not appear to me that the kingdom is safe without you, although it is presided over by the Chief Minister.

13. **Hero**—Fie, you fool! Do you fear that Matanga will rob me of my realm?

14, **Vidu**—What else?

15. **Hero**—Even if it be so, what (has to be feared) of it? From my body onwards, I hold everything for (the benefit of) others. If it (the kingdom) is not given away(to somebody)of my own accord, it is because of my father's intervention.

What is the use of thinking about this (petty) thing of a kingdom? It is enough to carry out my father's commands. I have been ordered by my father thus: "My child Jimutavahana, this abode (of ours) has become, by enjoyment (being used) for many days, deplete with the sacred wood (*Samit*), grass and flowers, and almost emptied of its roots, fruits, bulbs and wild rice [the nearer ones having been used up]. Go forth, therefore, to the Malaya Mountain and there look out for a habitable place for a hermitage." Come then, we shall go direct to the Malaya Mountain.

16. **Vidu**—As you command.

(*Both advance*)

**Vidu**—(*Looking in front*) Friend, truly this breeze of the Malaya Mountain, exceedingly fragrant by contact with the tops of dense forests of juicy sandal trees, and wafting showers of cool spray shaken from the wild

torrents broken by dashing against uneven places. removes the fatigue of the journey and causes my friend's body to tingle with pleasure, as the embrace of the beloved, eager for the first meeting (with her lover), (would do).

17. **Hero**—(*Noticing with wonder*) Oh! we have, indeed, reached the Malaya Mountain. (*Looking all round*) How wonderful is the beauty of this Malaya mountain! For,

With sandal trees exuding juice from the abrasions caused by the rubbings of the broad (wall-like)temples of wild elephants; with the depths of the caves roaring with the sound of the ocean-waves dashing into them; and with pearly rocks reddened with lac-dye from the feet of Siddha women moving about; this Malaya Mountain, by its very sight, creates an exhilaration in my mind. (8)

Come then, we shall ascend and find out some habitable place of hermitage.

18. **Vidu**—Let us do so. (*Stepping in front*) Come on (*Both gesticulate ascending*).

19. **Hero**—(*Indicating the throbbing of the right eye and considering*) Friend!

(My) right eye throbs, (yet) I have no desire for anything; but the words of the sages cannot be untrue. What does this indicate then? (9)

20. **Vidu**—Friend, it indicates some good at hand.

21. **Hero**—May it be as you say.

22. **Vidu**—(*Observing*) Friend! This looks like a penance-grove adorned with unusally thick and densely growing trees, with the issue of thick wreaths of smoke

KSS. xc, 3—201

तनयं प्रेरितः सद्भि-
स्तद्गुणैः सचिवैश्च सः ॥

यौवराज्यस्थितश्चैष
जातु जीमूतवाहनः ।
हितैषिभिरुपागत्य
जगदे पितृमन्त्रिभिः ॥
देव कल्पतरुर्योऽय-
मस्ति वः सर्वकामदः ।
अधृष्यः सर्वभूतानां
सैष पूज्यः सदा तव ॥
नास्मिन्सति हि शक्रोमि
बाधतास्मान् कुतोपरः ।
एतच्छ्रुत्वा स जीमूत-
वाहनोऽन्तरचिन्तयत् ॥
अहो बतेह शमिमं
सम्प्राप्यामरपादपम् ।
नासादितं किमप्यस्मा-
त्पूर्वैर्नस्तादृशं फलम् ॥
केवलं कैश्चिदप्यर्थै-
र्थिनैः कृपणोचितैः ।
आत्मा चैष महात्मा च
नीतौ द्वावपि लाघवम् ॥
तदहं साधयिष्यामि
काममस्मान्मनोगतम् ।
इति निश्चित्य स ययौ
महासत्त्वोन्तिकं पितुः ॥
तत्र संविहिताशेष-
शुश्रूषापरितोषितम् ।
सुखासीनं तमेकान्ते
पितरं स व्यजिज्ञपत् ॥

BKM. ix, 765—930

तं सर्वगुणसम्पन्न-
मभिषिच्यात्मजं पिता ।
कल्पवृक्षं ददावस्मै
नानासिद्धि सुधाफलम् ॥
कान्ताकटाक्षचपलं
चपलं यौवनं धनम् ।
जीवितं चेति सञ्ज्ञात्वा
तमर्थिभ्यस्तरुं ददौ ॥
तेन दारिद्र्यनाशाय
जगति प्रतिपादितः ।
हेम्ना सम्पूर्य निखिलं
क्षणात्सोऽन्तर्दधे द्रुमः ॥
कुलक्रमागते तस्मि-
न्कल्पवृक्षे व्ययीकृते ।
अपूर्वत्यागिता तेन
त्रिलोकी विस्मयं ययौ ॥

KSS. xc, 3—201

BKM. ix, 766—930

तातत्वमेव जानासि
यदेतस्मिन्भवाम्बुधौ ।
आशरीरमिदं सर्वं
वीचिविभ्रमचञ्चलम् ॥

विशेषेणाचिरस्थायि-
प्रकाशप्रविलायिनी ।
संध्या विद्युच्च लक्ष्मीश्च
दृष्टा कुत्र कदास्थिरा ॥

एकः परोपकारस्तु
संसारेस्मिन्ननश्वरः ।
यो धर्मयशसी सूते
युगान्तशतसाक्षिणी ॥

तत्तात क्षणिकेष्वेषु
भोगेष्वस्माभिरीदृशः ।
एषकल्पतरुः कस्य
कृते मोघोभिरक्ष्यते ॥

यैर्वा मम ममेत्येव-
माग्रहेणैष रक्षितः ।
पूर्वैस्ते कुत्र कुत्रायं
तेषां कश्चैष कोस्यवा ॥

तस्मात्परोपकारैक-
फलसिध्यै त्वदाज्ञया ।
तातैनं विनियुञ्जेऽहं
कामदं कल्पपादपम् ॥

एवमस्त्विति पित्रा च
दत्तानुज्ञोऽथ तेन सः ।
जीमूतवाहनो गत्वा
कल्पद्रुममुवाचतम् ॥

अभीष्टाः पूरिताः कामाः
पूर्वेषां देवनस्त्वया ।

KSS. xc, 3—201

तन्ममैकमिमं काम-
मनन्यं परिपूरय ॥

अदरिद्रां यथा पृथ्वी-
मिमां द्रक्ष्ये तथा कुरु ।
भद्रन्ते व्रज दत्तोऽसि
लोकायार्थार्थिने मया ॥

इत्युक्तवति जीमूत-
वाहने रचिताञ्जलौ ।
त्यक्तस्त्वयैष यातोऽस्मी-
त्युदभूद्वाक्तरोस्ततः ॥

क्षणाच्चोत्पत्य स दिवं
कल्पवृक्षस्तथा वसु ।
ववर्ष भुवि नैवासी-
त्कोप्यस्यां दुर्गतो यथा ॥

ततस्तस्य तथा तीव्र-
सर्वसत्वानुकम्पया ।
जीमूतवाहनस्यात्र
त्रैलोक्ये पप्रथे यशः ॥

तेन तद्गोत्रजा स्सर्वे
मात्सर्या दसहिष्णवः ।
तं लोकसात्कृतार्तिघ्न-
कल्पवृक्ष विनाकृतम् ॥

जेयं सपितृकं मत्वा
सम्भूय कृतनिश्चयाः ।
युद्धाय समनह्यन्त
तद्राज्यापजिहीर्षया ॥

तद्दृष्ट्वा प्राह पितरं
स्वं स जीमूतवाहनः ।
तात कस्यापरस्यास्ति
शक्तिस्त्वयि धृतायुधे ॥

BKM. ix, 766—930

ज्ञात्वा तं प्रतिसामन्ता
रहितं सुरशाखिना ।
तद्राज्यहरणोद्योगे
बभूवुः संहता मिथः ॥

जीमूतवाहनो ज्ञात्वा
विद्यया तद्विचेष्टितम् ।
तद्द्वेधाकूणितमना
राज्यं तत्याज निस्पृहः ॥

स पित्रा सह मात्रा च
तपसे सिद्धसेवितम् ।
मलयं खेचरवधू-
विलासनिलयं ययौ ॥

KSS. xc, 3—201

किं त्वस्य पापकस्यार्थे
शरीरस्य विनाशिनः ।
हत्वा बन्धूनकृपणो
राज्यं को नाम वाञ्छति ॥

तत्किं राज्येन नः कार्यं
गत्वान्यत्र क्वचिद्वयम् ।
धर्ममेव चरिष्यामो
लोकद्वयसुखावहम् ॥
मोदन्तां कृपणा एते
दायादा राज्यलोलुपाः ।
इत्युक्तवन्तं जीमूत-
केतुस्तं स पिताब्रवीत् ॥
अहं त्वदर्थमिच्छामि
राज्यं पुत्र त्वमेव चेत् ।
तज्जहासि कृपाविष्ट-
स्तन्मे वृद्धस्य तेनकिम् ॥
एवं कृताभ्यनुज्ञेन
पित्रा मात्रा च सोऽन्वितः ।
मलयाद्रिमगात्त्यक्त-
राज्यो जीमूतवाहनः ॥
तत्र चन्दनसंछन्न-
वहन्निर्झरकन्दरे ।
शुश्रूषमाणः पितरं
सतस्थौ कल्पिताश्रमः ॥
मित्रं चास्यात्र सम्पेदे
मित्रावसुरिति श्रुतः ।
विश्वावसोः सुतः सिद्ध-
राजस्यैतन्निवासिनः ॥

एकदा चात्र स भ्राम्य-
न्विवेशोपवनस्थितम् ॥

BKM. ix, 766—930

खेलद्भुजङ्गकटकं
सिद्धमण्डलसेवितम् ।

चण्डीपतिमिवोत्सर्प-
न्नीलकण्ठप्रधावनम् ॥
सञ्चरत्सिद्धललना-
चरणाम्भोज कान्तिभिः ॥
बिभ्राणामिव पर्यङ्क-
सक्ताब्धेर्विद्रुमावलीम् ॥
निर्भरस्मेर हाराङ्क-
मकरन्दोज्ज्वलांशुकम् ।
स त्वाद्यं भूभृतां धुर्यं
चन्दनागुरु भूषितम् ॥
स प्राप्य सर्वसिद्धीना-
माश्रयं विषयं श्रियः ।

पित्रोः सपर्यानिरत-
स्तस्थौ जीमूतवाहनः ॥

कदाचिदथ विस्रम्भ-
सारिणा सुहृदा सह ।

KSS. xc, 3—201

दृष्टमायतनं देव्या
गौर्या जीमूतवाहनः ॥
तत्रोपवीणयन्तीं च
ददर्श वरकन्यकाम् ।
सखीजनान्वितां शैल-
तनयाराधनोद्यताम् ॥

BKM. ix, 766—930

स्वैरं मधुकराख्येन
चचारोपवनेषु सः ॥
स तत्र कान्तं कुसुम-
करन्दं नाम काननम् ।
प्रविश्यापश्यदुच्छ्वासि-
सौरभाः पुष्पवल्लरीः ॥
यत्र खेचर नारीणां
तारनूपुररावभिः ।
अशोकाश्चरणाघातै-
रुत्फुल्ला भान्ति रागिणः ॥
यत्र विद्याधरवधू-
मधुगण्डूष निर्भरैः ।
जृम्भे वारम्भि वकुलैः
पुष्पाननविकासिभिः ॥
यत्र दिव्याङ्गनातुङ्ग-
स्तनोत्सङ्ग तरङ्गिणः ।
मन्दारमकरन्दाढ्याः
सुन्दरा वान्ति वायवः ॥
यत्रोद्धतालिपटलं
विलोक्य घनविभ्रमम् ।
नृत्यन्ति हेमकदली-
कुञ्जेषु शिखियोषितः ॥
उत्कण्ठा कोमलं यत्र
गीतं किन्नरयोषितः ।
शृण्वन्ति निश्चलाः साश्रु-
नयना हरिणाङ्गनाः ॥
ददर्श तत्र कैलास-
शिखर स्फारविभ्रमम् ।
गङ्गायितपताकाङ्कं
गौर्याः प्रासादमुन्नतम् ॥

| KSS. xc, 3—201 | BKM. ix, 766—930 |
|---|---|
| | स्वयमेत्य सितच्छाया-<br>स्पष्टीकृतदिगन्तरम् ।<br>स्थितं दुहितृवात्सल्या-<br>दिव तत्र हिमाचलम् ॥<br>देवीगर्भगृहे तस्मिन्<br>गीत वीणास्वनाश्रितम् ।<br>शुश्राव श्रोत्रपीयूषं<br>हृदयानन्द निर्झरम् ॥<br>तच्छ्रुत्वा कौतुकाकृष्टः<br>प्रविश्य गिरिजालयम् ।<br>कन्या मपश्यत्संसार-<br>सारं सरसिजेक्षणाम् ॥<br>प्रवाल पल्लवच्छाय-<br>पादाम्बुज युगं बभौ ।<br>रागसागरसञ्चारा-<br>दिव लग्नारुणद्रवम् ॥<br>लावण्यनलिनीबाल-<br>मृणालयुगलोपमे ।<br>जङ्घाकाण्डद्वयेतस्याः<br>कान्तिहंसोव्यरोचत ॥<br>विलासबर्हिकदली-<br>दण्डावूरूबभारसा ।<br>पुष्पायुधपुरी कान्त-<br>दन्ततोरणविभ्रमे ॥<br>पुलिने कान्तिसरितः<br>पर्यङ्कशयने रतेः ।<br>मेखलापरिखं यस्याः<br>जघनं मान्मथं पुरम् ॥<br>मग्नो नाभीह्रदावर्ते<br>हरकोपानलाकुलः । |

KSS. xc, 3—201

आकर्ण्यमानसंगीत-
मञ्जुवीणारवां मृगैः ।
दृष्टलोचनलावण्य
लज्जितैरिव निश्चलैः ॥

दधता तारकं कृष्ण-
मर्जुनेन स्वचक्षुषा ।
पाण्डवीयामिव चमूं
कर्णमूलं विविक्षतीम् ॥

BKM. ix. 766—930

कामोऽनुमीयते यस्या
रोमाली धूम्रलेखया ॥
तारहारांशुमुकुलै-
र्जातौ यस्याः पयोधरौ ।
चक्रवाकाविव मुखा-
सक्तबालबिसाङ्कुरौ ॥
यस्या वलयकेयूर-
नीलरत्नांशु भोगिभिः ।
तारुण्यचन्दन लता-
ललिते बभतुर्भुजे ॥
स्मरबालवसन्तेन
कृतेवाधरकान्तिभिः ।
श्यामा ययौ वनस्थाया
यस्याः किसलयावलिः ॥
सुस्पष्टनासावंशोच्च-
ललाटच्छलमाश्रिताः ।
यत्कटाक्षच्छटाः प्रापु-
रुत्पलोद्दामदायताम् ॥
वदनाम्भोजभृङ्गाली
या बभारालकावलीम् ।
प्रशस्तिमिव कामेन
न्यस्तां सौभाग्यभूपतेः ॥

KSS. xc, 3—201

परस्परविमर्देन
मुखेन्दोरिव दर्शनम् ।
अतृप्ताविव वाञ्छन्तौ
बिभ्रतीं सम्मुखौ स्तनौ ॥
धातुर्घटयतो मुष्टि-
ग्रहेणेव निपीडिते ।
वलीभग्नाङ्गुलीमुद्रे
मध्ये क्षाम मनोरमाम् ॥

दृष्ट्या च तया सद्यः
सोऽभूज्जीमूतवाहनः ।
तन्व्या मुषितचित्तोऽन्त-
र्दृष्टिमार्गं प्रविष्टया ॥
सापि तं भूषितोद्यानं
दृष्ट्वोत्कण्ठाविकारदम् ।
कामाङ्गदादवैराग्या-
द्वनं मधुमिवाश्रितम् ॥
तथानुरागविवशा
भेजे कन्या विहस्तताम् ।
यथा सखीव वीणास्या
व्याकुला लापतां ययौ ॥

ततः स पप्रच्छ सखीं
तस्या जीमूतवाहनः ।

BKM. ix, 766—930

तां दृष्ट्वा विस्मयोत्फुल्ल-
लोचनस्तन्मयोऽभवत् ।
क्षिप्रं नवावतारेण
स्मरेण तरलीकृतः ॥
विस्तीर्णं सुकृति प्राप्यं
तारुण्यस्तनपादपम् ।
प्रशान्तविग्रहकथं
न्यस्तचापमिव स्मरम् ॥
लक्ष्मी विलास भवनं
भुजस्तम्भ विभूषितम् ।
सापि लावण्यनलिनी-
राजहंसं विलोक्यतम् ॥
लज्जाभज्जत्तनुलता-
कम्पसम्पत्तरङ्गिता ।
असूत्रमौक्तिकलता
बभूव स्वेदबिन्दुभिः ॥
क्षिप्रं पुलकिता तस्याः
विरराज कुचस्थली ।
विशद्भिरिव पुष्पेषु-
शरैराकीर्णकेसरा ॥

ततः सहेलं तामेत्य
प्राह जीमूतवाहनः ।

KSS. xc, 3—201

किं धन्यं नाम सख्यास्ते
को वंशोऽलंकृतोऽनया ॥
तच्छ्रुत्वा सा सखी प्राह
नाम्ना मलयवत्यसौ।
मित्रावसु स्वसा सिद्ध-
राजविश्वावसोः सुता ॥
एवमुक्त्वा सहृदया
सा तं जीमूतवाहनम्।
नामान्वयौ च पृष्ट्वास्य
मुनिपुत्रे सहागतम्॥

BKM. ix, 766—930

प्रागुर्वुपायन कर्पूर-
मिव दंतांशुभिर्दिशन् ॥
आचाररुचिरः कोऽयं
क्रमस्तव विलोचने।
सम्भाष्य तेन यत्पूर्वं
स्वागतं प्रणयी जनः ॥
उक्त्वेति तन्मुखाम्भोज-
न्यस्तलोचन षट्पदः।
अपृच्छत्तत्सखीं लोल-
कुण्डलोद्योतितानन: ॥
रसाधार गुणाधारः
कुरुते कस्य नो मनः।
कौतुकोत्कलिका लोल-
स्वभावसुभगो जनः ॥
विधेरवधिनिर्माण-
त्रैलोक्यनयनोत्सवः।
कुलालंकरणं कन्या
कस्येयं ललिताकृतिः ॥
इत्युक्ता तेन सा प्राह
सखी प्रणयमन्थरम्।
गम्भीरोदारमधुरं
कलयन्ती तदाशयम् ॥
सत्यमुन्नतसत्त्वानां
दर्शनेन भवादृशाम्।
मनो नृत्यति किंत्वस्याः
क्षणं वाङ्न प्रवर्तते ॥
लज्जानिकेतनं कन्या
कथं नाथ तवाग्रतः।
सम्भाषणे सुप्रतिभा
ललनेव प्रगल्भते ॥

KSS. xc, 3—201

तां ब्रवीतिस्म मलय-
वतीं स्मितमिताक्षरम् ।
सखि विद्याधरेन्द्रस्य
नास्यातिथ्यं करोषिकिम् ॥
जगत्पूज्योतिथिर्ह्येष
प्राप्त इत्युदिते तया ।
साभूद्विद्याधरसुता
तूष्णीं लज्जानतानना ॥
लज्जावतीयं मत्तोऽर्घां
गृह्यतामिति वादिनी ।
एकाथ तत्सखी तस्मै
साघ्र्यां मालामुपानयत् ॥
स चादायैव जीमूत-
वाहनः प्रेमनिर्भरः ।
कण्ठे मलयवत्यास्तां
मालां तस्याः समर्पयत् ॥
सापि तिर्यक्प्रसृतया
पश्यन्ती स्निग्धया दृशा ।
नीलोत्पलमयीं माला-
मिव तस्मिन्न्यवेशयत् ॥

इत्यन्योन्यकृताशब्द-
स्वयंवरविशेषयोः ।

BKM. ix, 766—930

विश्वावसोः सिद्धपते-
र्वंश सुलवा लता सुता ।
इयं मलयवत्याख्या
नित्यं गौरीस्तुतिप्रसा ॥
निवेद्येति सखी क्षिप्रं
तद्वयस्यादथाशृणोत् ।
जीमूतवाहन कथां
प्राच्याभिनयशालिनीम् ॥
ततो नवसमुन्मेष-
कुसुमेषुतरङ्गिताम् ।
कान्तां पिबन्निव दृशा
प्राह जीमूतवाहनः ॥
सहजेनाभिलाषेण
गुणैः कान्त्या च भूषिता ।
इदमालोक्यते क्षिप्रं
यदेतज्जन्मनः फलम् ॥
आनन्दमधुरा दृष्टि-
र्मनः प्रीतितरङ्गितम् ।
सतामेतावदौचित्यं
बाह्यस्त्वाचारडम्बरः ॥
समागमं सुधावृष्टिं
दृष्टिपातमनुग्रहम् ।
एवं चिरस्य वपुषः
को हि नाम न मन्यते ॥

इति ब्रुवाणे सानन्दं
तस्मिन्विद्याधराधिपे ।

KSS. xc, 3—201

तयोरेत्य जगादैका
चेटी तां सिद्धकन्यकाम् ॥
जननी राजपुत्रि त्वां
स्मरत्यागच्छ माचिरम् ।
तच्छ्रुत्वाकृष्य कामेषु
कीलितामिव कृच्छ्रतः ॥
सोत्कां प्रियमुखाद्दृष्टिं
कथंचित्सा ययौ गृहम् ।
जीमूतवाहनोप्यागा-
त्तद्गतात्मा स्वमाश्रमम् ॥

साऽथ स्वां जननीं दृष्ट्वा
प्राणेशविरहातुरा ।
गत्वा मलयवत्याशु
पपात शयनीयके ॥
अथान्तर्गतकामाग्नि-
धूमेनेवाविलेक्षणा ।
अश्रुधाराः प्रमुञ्चन्ती
सन्तापक्वथिताङ्गका: ॥
सखीभिश्चन्दनैर्लिप्ता
वीजिता चाब्जिनीदलैः ।
रतिं न भेजे शयने
नाङ्के सख्या न भूतले ॥
गतेऽथ वासरे क्वापि
रक्तया सह सन्ध्यया ।
हसत्प्राचीमुखं चन्द्रे
समाक्रम्य च चुम्बति ॥

BKM. ix, 766—930

आहूता सा प्रतीहार्या
प्रतस्थे मातुरन्तिकम् ॥
न्यस्तं मयि मनः पाल्य-
मेतद्दृश्यन्तपेशलम् ।
इतीव कान्तं सा प्राह
व्रजन्ती नूपुरारवैः ॥
ददौ त्रिकपरावृत्ति-
ललितैकस्तनी मुहुः ।
तस्मै दृशं सा धम्मिल्ल-
मधुपासारणच्छलात् ॥
वेपथुस्तम्भसंरुद्धा
तन्वी कृच्छ्रेणसाययौ ।
सुकुमारेण मनसा
सावहन्ती महाभुजम् ॥
निजमन्तः पुरं प्राप्य
निश्वसन्ती श्लथांशुका ।
पपात शयनोत्सङ्गे
दष्टा मकरकेतुना ॥
तस्याः प्रववृधे क्षिप्रं
स कोपि विरहानलः ।
यः सिच्यमानो बाष्पाम्बु-
पूरैरुज्जृम्भतेऽधिकम् ॥
अत्रान्तरे जलनिधिं
प्रविष्टे वासरेश्वरे ।
बभूव रागिणी संध्या
नलिनीवनशालिनी ॥
पद्मसङ्कोचचकिता
बभ्रमुर्भ्रमरा भुवि ।
सन्ध्यया सपदि न्युप्ता-
स्तमोबीजकणा इव ॥

KSS, xc, 3—201

स्मरेण प्रेर्यमाणापि
दूतीसम्प्रेषणादिना ।
लज्जया नाशकत्कर्तुं
जीवितस्पृहयोज्झिता ॥
निनाय च निशामिन्दु-
विषमामञ्जिनीवताम् ।
बद्धमोहालिपटले
हृदि सङ्कोचमेत्यसा ॥
तावच्च तद्वियोगार्तः
सोऽपि जीमूतवाहनः ।
शयनस्थोपि पतितो
हस्ते कुसुमधन्वनः ॥
नूतनोद्भिन्नरागोपि
प्रोन्मिषत्पाण्डुरच्छविः ।
ह्रीमूकोपि वदन्पीडां
कामजामनयन्निशाम् ॥

BKM. ix, 766—930

तिमिरैरञ्जनश्यामैः
श्यामावदनकुन्तलैः ।
चक्रवाकी वियोगाग्नि-
धूमोत्थैरुत्थितं ततः ॥
नीलाम्बुजैरिवोत्सृष्टं
भ्रमरैरिव मूर्च्छितम् ।
नीलकण्ठै रिवोद्गीर्णं
चचार सुचिरं तमः ॥
अथादृश्यत चण्डीश-
जटामण्डलमण्डनम् ।
श्यामा कर्पूरतिलको
रोहिणीरमणः शशी ॥
दिक्कान्ताकेलिमुकुले
निशामौक्तिककुण्डले
स्मरराजसितच्छत्रे
शशिनि स्मेरजृम्भिते ॥
उत्फुल्लकुसुमामोद-
नन्दितेन्दीवरा मुहुः ।
पद्मिनीविरहोच्छ्वासा
इव बालानिला ववुः ॥
योषितां हृदयाकाण्ड-
भङ्गयन्त्रोपले विधौ ।
प्रौढिं प्रयाते पञ्चेषु-
वह्निकुण्डमहोल्मुके ॥
श्रीखण्डरस संसिक्त-
कदलीदल शालिनी ।
बभूव गाढ सन्ताप-
क्रान्ता सिद्धपतेः सुता ॥
न जलार्द्रैर्नैवसनै-
र्नहारैर्न सरोरुहैः ।

KSS. xc, 3—201

BKM. ix, 766—930

तस्या न चन्द्रकान्तैश्च
शशाम मदनानलः ॥
सा लज्जातरला प्राह
तां सखीं पार्श्ववर्तिनीम् ।
अयि त्वमेव मे तत्र
कान्तदर्शनसाक्षिणी ॥
किं करोमि क्व गच्छामि
कस्यैतत्कथयामि वा ।
प्रियं प्रणयशालिन्यो
निर्लज्जा बत योषितः ॥
किं वा सन्दिश्यते तस्मै
लीलया हृतचेतसे ।
युवासौ भाग्यसम्पन्नो
वाचः कस्य शृणोति वा ॥
विज्ञप्तोऽसीति कार्पण्यं
वदतीति प्रगल्भता ।
एहीत्याज्ञावलेपोऽयं
प्रियोऽसीति विलज्जता ॥
न जीवामीत्यसदृशं
त्वत्प्रियास्मीत्यलक्षितम् ॥
आगच्छामीत्यनुचितं
स्मरार्तास्मीति चापलम् ॥
न जाने सखि किं वाच्यो
दैवादासादितोपि सः ।
सर्वथा नष्टसार्थेऽस्मि-
न्मरणं शरणं मम ॥
वयस्यामभिधायेत्थं
सा निनायाशु निर्झरैः ।
सन्तापशोककठिनं
कुचनन्दनमर्दिताम् ॥

KSS. xc, 3—201

प्रातश्चात्युत्सुको भूय-
स्तद्गौर्यायतनं ययौ ।
यत्र दृष्टाभवत्तेन
सासिद्धाधिपपुत्रिका ॥
तत्र तेन स मित्रेण
मुनिपुत्रेण पृष्टतः ।
आगत्याश्वास्यते याव-
न्मदनानिलविह्वलः ।

तावत्तत्रैव साप्यागा-
न्निर्गत्यैकैव निर्जने ।
गुप्तं मलयवत्यात्म-
त्यागाय विरहासहा ॥
अलक्षयन्ती कान्तं स्वं
पादपान्तरितं च सा ।

BKM, ix, 766—930

जीमूतवाहनोऽप्यस्मि-
न्नन्तरे विरहाकुलः ।
तस्मिन्गौरीवरोद्याने
चारीन्दुमुखीं स्मरन् ॥
स काम भुजगाक्रान्तः
कौमुदी विषमूर्च्छितः ॥
सन्तापविह्वलो लेभे
वातूलतरलां स्थितिम् ।
तं ध्यानमूकमभ्येत्य
क्षामं मधुकरः सखा ॥

उवाच विप्लवः कोऽयं
तवापि मनसः सखे ।
भजन्ति सततं सन्तो
विद्यार्जवपरिश्रमम् ॥
येन न व्यसनापाते
मुह्यन्ति मतिविप्लवैः ।
इति श्रुत्वा विनिश्वस्य
तस्मै जीमूतवाहनः ॥
क्षणं विलोक्य वसुधां
स्वस्थोऽस्मीति तमभ्यधात् ।
प्रत्यग्रचन्दनदलैः
कल्पिते सुहृदा ततः ॥
निषण्णः शयने प्राप
न स सन्तापतानवम् ।
अत्रान्तरे मलयव-
त्यभ्येत्य विरहासहा ॥
गौर्याश्रमे तरुलता-
प्रान्ते पाशमकल्पयत् ।
ततः प्रणम्य गिरिजां
हा हतेति विलप्य सा ॥

KSS. xc, 3—201

उदश्रुलोचना बाला
देवीं गौरीं व्यजिज्ञपत् ॥
त्वद्भक्त्या देवि संवृत्तो
नास्मिन् जन्मनि चेन्मम ॥
जीमूतवाहनो भर्ता
तद्भूयात्सोऽन्यजन्मनि ॥

इत्युक्त्वारचयामास
स्वोत्तरीयेण तत्क्षणम् ॥
अशोकतरुशाखायां
पाशं सा गिरिजाग्रतः ॥
हा नाथ विश्वविख्यात-
करुणेनापि न त्वया ॥
कथमस्मि परित्राता
देव जीमूतवाहन ॥

एवमुक्त्वा गले याव-
त्सा तं पाशे नियच्छति ॥
उच्चचार दिवस्ताव-
द्भारती देव्युदीरिता ॥
पुत्रि मा साहसं कार्षी-
श्चक्रवर्ती पतिस्तव ।
विद्याधरेन्द्रो जीमूत-
वाहनो हि भविष्यति ॥
इत्युक्तवत्यां देव्यां स
श्रुत्वैव सवयस्यकः ॥
जीमूतवाहनो दृष्टां
प्रियामुपजगामताम् ।
सैष देव्या वरः पश्य
वितीर्णः सत्य एवते ॥

इति जल्पति बालां तां
तन्मित्रे मुनिपुत्रके ॥

BKM. ix, 766—930

विधाय साश्रुनयना-
स्तत्र बालामृगांगनाः ।
जीमूतवाहनो भूया-
दन्यस्मिन्मे स जन्मनि ॥
विभुरित्यभिधायाभूत्
साशापाभिमुखोक्षणात् ।

तच्छ्रुत्वा सकृदाहूत-
स्तूर्णंजीमूतवाहनः ॥
छन्नस्तरुलताजालैः
शुश्राव च ददर्श च ।
ततो भगवती प्राह
पुत्रिमा साहसं कृथाः ॥
भविता चक्रवर्ती ते
भर्ता जीमूतवाहनः ।
इति देवीवरं प्राप्य
साददर्श पुरः स्थितम् ॥
जीमूतवाहनं हर्ष-
लज्जामुकुलितेक्षणाः ।

KSS. xc, 3—201

जीमूतवाहनस्तत्र-
ब्रुवन् प्रणयपेशलम् ॥
स्वहस्तेनैव तं तस्याः
कण्ठात्पाशमपानयत् ॥
ततोऽकस्मात्सुधावर्ष-
मिवमन्वानयोस्तयोः ॥
भुवं मलयवत्यां च
लिखन्त्यां हीनया दृशा ॥
चिन्वानागत्य सहसा
सखी दृष्टा जगादताम् ॥
सखि कल्याणिनी दीष्ट्या
वर्धसेभीष्टसिद्धितः ॥
अद्यैव हि महाराज-
स्तवविश्वावसुः पिता ।
कुमारमित्रावसुना
विज्ञप्तः सन्निधौ मम ॥
इहागतो जगन्मान्य-
स्तात कल्पतरुप्रदः ।
विद्याधरेन्द्रतनयो
योऽयं जीमूतवाहनः ॥
अतिथित्वात्स नः पूज्यो
वरश्चान्यो न तादृशः ।
तस्मान्मलयवत्यासा
कन्यारत्नेन पूज्यताम् ॥
तथेति श्रद्धिते राज्ञा
भ्राता मित्रावसुः स ते ।
तादर्थ्येन महाभाग-
स्यास्याश्रमपदं गतः ॥
जाने सद्यश्च भावी ते
विवाहस्तत्स्वमन्दिरम् ।

BKM. ix, 766—930

अत्रान्तरे समभ्येत्य
चेटिका तां व्यजिज्ञपत् ॥
दिष्ट्या विवर्धसे देवि
कल्पितस्ते महोत्सवः ॥
त्वद्भ्राता जनकादेशा-
दद्यविद्याधरात्मजः ॥
जीमूतकेतुपुत्राय
दातुं त्वां सादरोऽस्थितः ॥

KSS. xc, 3—201

आयाहि यातु चैषोपि
महाभागः स्वमास्पदम् ॥

इत्युक्ता सा तथा सख्या
राजपुत्री शनैस्ततः ।
ययुः सहर्षा सोत्का च
मुहुर्वलितकन्धरा ॥

जीमूतवाहनायाशु
गत्वा स्वाश्रममागतात् ।
मित्रावसोर्यथा भीष्टं
कार्यं श्रुत्वाभिनन्द्य च ॥

जातिस्मरः समाचख्यौ
तस्मै स्वं पूर्वजन्म सः ।
यत्र मित्रं स तस्यासी-
त्सा च भार्यैव तत्स्वसा ॥

ततो मित्रावसुः प्रीत-
स्तत्पित्रोः परितुष्यतोः ।
आवेद्य गत्वा पितरौ
कृतार्थः स्वावनन्दयत् ॥

निनाय च तदैव स्वान्
गृहाञ्जीमूतवाहनम् ।
चक्रे चोत्सवसंभारं
स्वसिद्ध्युचितवैभवम् ॥

तस्मिन्नेव च धन्येऽह्नि
तस्य विद्याधरप्रभोः ।
स्वसुर्मलयवत्याश्च
विवाहं समपादयत् ॥

ततोनवोढया साकं
तथा जीमूतवाहनः ।
तस्थौ मलयवत्या स
तत्रसिद्धमनोरथः ॥

BKM. ix, 766—930

तदेहि कल्पितोऽद्यैव
विवाहो जनकेनते ।
इति श्रुत्वैव सा तूर्णं
प्रययौ चारुहासिनी ॥

जीमूतवाहनोप्याशु
समेत्य पितुरन्तिकम् ।
उवाहमङ्गलोदार-
विवाहोचित भूषणम् ॥

ततो महोत्सवानन्दि-
विद्याधर शतानुगः ।
परिणीय प्रियतमां
सोऽभूत्संभोगतत्परः ॥

प्रेयस्याः सोऽग्रजं तुल्य-
रूपं मित्रावसुं व्यधात् ॥
विलास केलिलीलासु
प्ररूढप्रेमभाजनम् ॥

KSS. xc, 3—201

एकदा कौतुकाच्चात्र
स मित्रावसुना सह ।
मलयाद्रौ भ्रमन्नब्धे-
र्वेलावन मुपेयिवान् ॥
तत्रास्थिराशीन् सुबहून्
दृष्ट्वा मित्रावसुं सतम् ।
केषामेतेऽस्थि सङ्घाताः
प्राणिनामिति पृष्टवान् ॥
ततो मित्रावसुः स्याल-
स्तं कारुणिक मब्रवीत् ।
शृणु वृत्तान्तमत्रेमं
संक्षेपाद्वर्णयामि ते ॥
नागमाता पुरा कद्रू-
र्विनतां तार्क्ष्यं मातरम् ।
निनाय किल दासत्वं
सव्याजपणनिर्जिताम् ॥
तेन वैरेण गरुड-
स्त्वा मुन्मोच्यापि मातरम् ।
बली भक्षयितुं नागान्
कद्रुपुत्रान् प्रचक्रमे ॥
सदा प्रविश्य पातालं
सोऽथ कांश्चि जघासतान् ।
कांश्चिन्ममर्द केचित्तु
स्वयं त्रासाद्विपेदिरे ॥
तद्दृष्ट्वैकपदे सर्व-
क्षयमासङ्क्य नागराट् ।
वासुकिः प्रार्थनापूर्वं
तार्क्ष्यस्य समयं व्यधात् ॥
एकमेकमहं नाग
माहारार्थं खगेन्द्र ते।

BKM. ix, 766—930

कदाचिदथ विस्रम्भा-
त्सं मित्रावसुना सह ।
चचार जलधेर्वेला-
वनान्त मवलोकयत् ॥
ददर्श तत्र शिखरा-
कारं नागास्थिसञ्चयम् ।
युगक्षये महाभूतं
करकैरिव पूरितम् ॥
किमेतदिति तेनाशु
पृष्टो मित्रावसुस्ततः ।
उवाच गरुडेनात्र
भक्षिता भुजगोत्तमाः ॥

सर्वक्षय भयात्तार्क्ष्य-
स्ततो वासुकिनार्थितः ।
विसृष्टं तेन वीरेण
सदैकं नागमत्त्यसौ ॥

KSS. xc. 3—201

प्रत्यहं प्रेषयाम्यत्र
पुलिने दक्षिणोदधेः ॥
त्वयातु न प्रवेष्टव्यं
पातालेऽस्मिन्कथञ्चन ।
कोहि स्वार्थो विनष्टेषु
नागेष्वेकपदे तव ॥

इत्युक्ते नागराजेन
समर्थं प्रत्यपद्यत ।
स्वार्थदर्शी तथेत्येव
गरुडो गुरुविक्रमः ॥

तदा प्रभृति चैकैकं
नागं भुङ्क्ते दिने दिने ।
वासुकिप्रेषितं सोऽत्र
खगेन्द्रः पुलिनेऽम्बुधेः ॥

अतस्तद्भक्ष्यमाणानां
नागानामस्थिसंचयाः ।
एतेऽत्र गिरिशृङ्गाभा
वृद्धिं कालक्रमाद्गताः ॥

इति मित्रावसोर्वक्त्रात्
सान्तर्दुःखो निशम्य सः ।
निजगाद दयाधैर्य-
निधिर्जीमूतवाहनः ॥

शोच्यः स वासुकी राजा
यः स्वहस्तेतु विद्विषे ।
उपहारी करोति स्वाः
प्रजाः क्लीबो दिनेदिने ॥

धृताननसहस्रः स-
न्नेकेनाप्याननेन सः ।
मामादौ तार्क्ष्य भुङ्क्ष्वेति
भाषितुं नाशकत्स्वयम् ॥

BKM. ix, 766—930

जीमूतवाहनोप्येकः
सर्पेषु करुणाकुलः ।
चचार तत्र निस्सारं
संसारं कलयन् धिया ॥

KSS. xc, 3—201

कथं चाभ्यर्थयामास
निःसत्वःस्वकुलक्षयम् ।
तार्क्ष्यं नागाङ्गनाक्रन्द-
नित्याकर्णननिर्घृणः ॥
तार्क्ष्योऽपि काश्यपिर्वीरः
कृष्णाधिष्ठानपावनः ।
ईदृशं कुरुते पाप-
महो मोहस्य गाढता ॥
इत्युक्त्वा स महासत्त्वो
हृदि चक्रे मनोरथम् ।
अप्यसारेण देहेन
सारमत्राप्नुयामहम् ॥
एकस्याप्यद्य नागस्य
कुर्यां जीवितरक्षणम् ।
अबान्धवस्य भीतस्य
दत्वात्मानं गरुत्मते ॥

इति संचिन्तयत्येव
तस्मिञ्जीमूतवाहने ।
मित्रावसोः पितुः पार्श्वा-
त्क्षत्ताह्वानार्थमाययौ ॥
व्रजत्वमहमेष्यामि
पश्चादिति ततश्च तम् ।
मित्रावसुं स जीमूत-
वाहनो व्यसृजद्गृहम् ॥

याते तस्मिन्स चात्रैको
वाञ्छितार्थोन्मुखो भ्रमन् ।
कृपालुरश्रृणोद्दूरा-
त्करुणं रुदितध्वनिम् ॥
गत्वा ददर्श चोत्तुङ्ग-
शिलातलसमीपगम् ।

BKM. ix, 766—930

अयमस्थिचयस्तेषा-
मद्रिकूटसमुच्छ्रयः ।
उक्तेति जनकाहूत-
स्तूर्णं मित्रावसुर्ययौ ॥

ततो ददर्श करुणा-
क्रन्दशुष्काधराननाम् ।
वृद्धाङ्गनां कुमारेण
सान्त्वमानां मुहुर्मुहुः ॥
पूर्णेन्दुसुन्दरमुखं
कान्ति धूतदिगन्तरम् ।

KSS. xc, 3—201

युवानमेकं पुरुषं
दुःखितं सुन्दराकृतिम् ॥
पुंसा राजभटेनेव
त्यक्तमानीय तत्क्षणम् ।
निवर्तयन्तं रुदतीं
वृद्धां सानुनयं स्त्रियम् ॥
काऽयं स्यादिति यावच्च
जिज्ञासुः सोऽत्र तिष्ठति ।
करुणाकुलितश्छन्नः
शृण्वञ्जीमूतवाहनः ॥
तावत्सा तत्र वृद्धा स्त्री
दुःखभारातिपीडिता ।
प्रावर्तत युवानं तं
दृष्ट्वा दृष्ट्वानुशोचितम् ॥
हा शङ्खचूड हा दुःख-
शतसम्प्राप्त हा गुणिन् ।
कुलैकतन्तो हा पुत्र
क्व त्वां भक्ष्याम्यहं पुनः ॥
यस्य त्वन्मुखचन्द्रेस्मिन्
गतऽस्तं स पितातव ।
शोकान्धकारपतितः
कथं वृद्धो भविष्यति ॥
अथार्ककरसंस्पर्शा-
दङ्गं दूयेत यत्तव ।
कथं शक्ष्यन्ति तत्सोढुं
तार्क्ष्यभक्षणजां रुजम् ॥
विस्तीर्णे नागलोकेऽपि
धात्रा नागाधिपेन च ।
लब्धस्त्वं किमधन्याया-
विचिन्त्यैकसुतो मम ॥

BKM. ix, 766—930

स्फुरत्स्फीतफणारत्न-
पुञ्जपिञ्जरिताम्बरम् ॥
आनन्दमिव कासारं
सन्तोषमिव जङ्गमम् ।
तं वीक्ष्य तनयं वृद्धा
विललापाश्रुगद्गदम् ॥
हा पुत्र नयनानन्द
सौन्दर्यामृतदीधिते ।
शङ्खपालमहावंश-
व्यक्तमुक्तामणीयित ॥
हा शङ्खचूड लावण्य-
निधानमिदमेव ते ।
वपुर्गरुडचञ्च्वग्र-
वज्रपातासहं कथम् ॥
भीतेन नागराजेन
प्रेषितोऽसि गरुत्मते ।
सुकुमार शरीरेऽस्मि-
न्कस्ते त्राणं भविष्यति ॥

KSS. xc, 3—201

इति तां विलपन्तीं च
स युवा तनयोऽब्रवीत् ।
दुःखार्तमपि मामम्ब
किं दुःखयसि हाभृशम् ॥
निवर्तस्व गृहानेष
प्रणामः पश्चिमस्तव ।
इहागमनवेला हि
भवेज्जातु गरुत्मतः ॥
तच्छ्रुत्वा हा हतास्मीह
कोमे पास्यति पुत्रकम् ।
इति चक्रन्द सा वृद्धा
दिक्षु क्षिप्तार्तलोचना ॥
तावच्च बोधिसत्त्वांशः
स तज्जीमूतवाहनः ।
श्रुत्वा दृष्ट्वा च कृपया
गाढाक्रान्तो ऽप्यचिन्तयत् ॥
हन्तायं शङ्खचूडाख्यो
नागो वासुकिना बत ।
आहारहेतो स्तार्क्ष्यस्य
तपस्वी प्रेषितोऽधुना ॥
इयं चैतस्य जननी
स्नेहेनेहान्वगागता ।
एतदेक सुता वृद्धा
दुःखदीन प्रलापिनी ॥
तदेनमेकमार्तं च
देहेनैकान्त नाशिना ।
रक्षामि नामुना नागं
तन्मे धिग्जन्म निष्फलम् ॥
इत्यालोच्योपगम्यैव
मुदा जीमूतवाहनः ।

BKM. ix, 766—930

इति पुत्र मुखाम्भोज-
माघ्राय विललाप सा ॥
जीमूतवाहनोऽभ्येत्य
तामुवाच कृपाकुलः ।
मातः स्थितोऽस्मि ते पुत्र
परित्राण कृतक्षणः ।
परोपकारः संसारे
निस्सारे प्राप्यते कुतः ॥
अयमेव सदापाये
काये सारसमुच्चयः ।
यत्प्रयाति परायास-
त्राणसत्पुण्य पात्रताम् ॥
इत्याकर्ण्य परित्रस्ता
सुपर्णाशङ्किनो ततः ।
पुत्रमासाद्य साकम्पा
सा पुरः प्रणनाम तम् ॥
नाऽहं भुजङ्गाधिपति-
वितीर्य निजविग्रहम् ।

| KSS. xc, 3—201 | BKM. ix, 765—930 |
|---|---|
| वृद्धामुवाच तां मातः | विद्याधरो रक्षिताहं |
| पुत्रं रक्ष्याम्यहं तव ॥ | त्वत्पुत्रस्येति सोऽभ्यधात् ॥ |
| तच्छ्रुत्वा भावितभया | वृद्धावदत्त्वमथ |
| वृद्धा गरुडशङ्किनी । | शङ्खचूडाधिको मम । |
| संत्रस्ता तार्क्ष्य मां भुङ्क्ष्व | बहुकल्पशतं धन्यां |
| मां भुङ्क्ष्वेति जगाद सा ॥ | रक्ष सौम्यामिमां तनूम् ॥ |
| शङ्खचूडस्ततोऽवादी- | |
| न्नैष तार्क्ष्योऽम्बमात्रसीः | |
| क्वायं चन्द्र इवाह्लादी | |
| क्व स तार्क्ष्यो भयङ्करः ॥ | |
| इत्युक्ते शङ्खचूडेन | |
| प्राह जीमूतवाहनः । | |
| विद्याधरोऽहमायातो | |
| रक्षितुं सुतमम्ब ते ॥ | |
| दास्यामि हि शरीरं स्वं | |
| वस्त्रच्छन्नं गरुत्मते । | |
| क्षुधिताय प्रयाहि त्व- | |
| मादायैनं सुतं गृहम् ॥ | |
| तच्छ्रुत्वा साब्रवीद्वृद्धा | |
| मैवं त्वं ह्यधिको मम । | |
| पुत्रो यस्येदृशे काले | |
| कृपास्मास्वियमीदृशी ॥ | |
| एतच्छ्रुत्वा स जीमूत- | इति तस्यां ब्रुवाणायां |
| वाहनः पुनरब्रवीत् । | शङ्खचूडोऽतिविस्मितः । |
| न मे मनोरथस्यास्य | तमभ्यधात्स्मितमुखो |
| भङ्गं कर्तुमिहार्हथ ॥ | ललाटरचिताञ्जलिः ॥ |
| अहादेवं ब्रुवाणं च | अभिनन्दितमेतत्ते |
| शङ्खचूडो जगाद तम् । | दर्शनं सत्त्वशालिनः । |
| दर्शितैव महासत्त्व | पूर्णेन्दुरमृतोद्गारि- |
| त्वया सत्यं कृपालुता ॥ | किरणः कस्य न प्रियः ॥ |

KSS. xc, 3—201

न त्वहं त्वच्छरीरेण
रक्ष्यामि स्वशरीरकम् ।
रत्नव्ययेन पाषाणं
कोहि रक्षितुमर्हति ॥

भाद्दशैस्तु जगत्पूर्णं
स्वात्ममात्रानुकम्पिभिः ।
अनुकम्प्यं जगद्येषां
विरलास्ते भवाद्दशाः ॥

न चाहं मलिनीकर्तुं
शङ्खपालकुलं शुचि ।
कलङ्कइव तीक्ष्णांशु-
बिम्बं शक्ष्यामिसन्मते ॥

इति तं प्रतिषिध्यैव
शङ्खचूडः स्वमातरम् ।
जवादाम्ब निवर्तस्व
कांताराद्दुर्गमादितः ॥

न पश्यसि किमत्रैन-
श्वागासृक्कर्दमोक्षितम् ।
कृतान्त लीलापर्यङ्क-
रौद्रं वध्यशिलातलम् ॥

अहं चाब्धितटे गत्वा
नत्वा गोकर्णमीश्वरम् ।
आगच्छामि द्रुतं याव-
न्नायाति गरुडोत्र सः ॥

इत्युक्त्वा कृपणाक्रन्दां
प्रणम्यापृच्छय मातरम् ।
स गोकर्णं प्रणामार्थं
शङ्खचूडो ययौ ततः ॥

BKM. ix, 766—930

अहो नु त्वं निजान्प्राणा-
न्मदर्थं दातुमुद्यतः ।
सहामहे कथं नाम
तृणार्थे रत्नविक्रयम् ॥

कियन्तो न भवाम्भोधौ
जाता याताश्च मद्विधाः ।
कौस्तुभस्येव भवतः
क्व दृष्टः पुनरुद्भवः ॥

सत्त्वोजलं तवैवैत-
न्मुखेन्दौ शोभते वचः ।
अन्धकायस्य जगता-
मनाख्यानेतु पातितम् ॥

मद्वियोगाग्निविधुरा
समाश्वास्या विभो त्वया ।
माता मे स्याददृष्टोऽपि
साधुः सुचिरबान्धवः ॥

इति नागकुमारस्य
वचः श्रुत्वा कुलोचितम् ।
जीमूतवाहनः प्राह
बतचित्रं प्रभाषसे ॥

वृद्धेयं त्वां विना पुत्रं
कुलालङ्करणं सखे ।
कथं जीवति दुःखंहि
जननीनां सुदुस्सहम् ॥

एतां त्रातुं निजात्मानं
रक्ष त्वजीविताश्यसौ ।
अस्याः प्राणपरित्यागे
विद्धन्मा कारणं भवः ॥

शरीरेण मदीयेन
द्वयं पाहि महामते ।

KSS. xc, 3—201

अस्मिंश्चेदन्तरे प्राप्त-
स्तार्क्ष्यः सिद्धो ममेप्सितः ।
परार्थ इति जीमूत-
वाहनोऽप्यकरोद्धृदि ॥

ताव च्चासन्नपक्षीन्द्र-
पक्षानिलचलांस्तरून् ।
विलोक्यात्र स मामेति
निवारण परानिव ॥

मत्वा गरुडवेलां च
प्राप्तां जीमूतवाहनः ।
परार्थ प्राणदो वध्य-
शिलामभ्यारुरोह ताम् ॥

पवनाघूर्णिते चाब्धौ
स्फुरद्रत्न प्रभादृशा ।
तं सत्वातिशयं तस्य
पश्यतीव सविस्मयम् ॥

BKM. ix, 766—930

इत्युक्त्वा शङ्खचूडस्य
पादयोर्निपपातसः ॥

फणिसूनुस्तमवह-
न्निर्बन्धाकुलितस्ततः ।
श्रुत्वा विवेचितं नैव
मादृशामीदृशं वचः ॥

न नाम शङ्खधवलं
शङ्खपालं महाकुलम् ।
मयापि शङ्खचूडेन
सत्वभङ्गात्कलङ्क्यते ॥

आसन्नो गारुडः कालः
स्वस्ति गच्छाम्यहं विभो ।
वधशैले प्रणम्याशु-
गोकर्णशशिशेखरम् ॥

उक्त्वेति मात्रानुगते
याते तस्मिन् क्षणादभूत् ।
उच्चण्डाकाण्डकल्पान्त-
वातव्याकुलितं जगत् ॥

कालदोर्दण्डशङ्काभा-
श्छटाघटितदिक्तटाः ।
उत्तस्थुर्मकरास्फार-
करालाः सागरोर्मयः ॥

ततश्चण्डांशुतप्तस्य
सुमेरोरिव रश्मिभिः ।
अभूदौर्वानिलेनेव
पूरितं पिञ्जरं नभः ॥

आगतं गरुडं ज्ञात्वा
सूचितं पक्षमारुतैः ।
आरुरोह मदाबद्धः
शिलां जीमूतवाहनः ॥

KSS. xc, 3—201

आगत्याच्छादितनभा
निपत्यैतच्छिलातलात् ।
चञ्च्वा गरुत्मानाहत्य
महासत्त्वं जहार तम् ॥
स्रुतासृग्धारमुत्खात-
शिरोरत्नं च तं जवात् ।
नीत्वा भक्षयितुं शृङ्गे
मलयाद्रेः प्रचक्रमे ॥
एवमेव परार्थाय
देहः स्यात्प्रतिजन्म मे ।
माभूतां स्वर्गमोक्षौ तु
परोपकृतिवर्जितौ ॥
इति तार्क्ष्याद्यमानस्य
तस्यानुध्यायतस्तदा ।
विद्याधरेन्द्रोरपत-
त्पुष्पवृष्टिर्नभस्तलात् ॥

अत्रान्तरे स तद्रक्त-
धारास्रवशिरोमणिः ।
तस्या मलयवत्याश्च
तत्पत्न्याः प्रापतत्पुरः ॥
सा तद्दृष्ट्वा परिज्ञाय
चूडारत्नं सुविह्वला ।
अन्तिकस्था श्वशुरयो-
स्ताभ्यां साश्रुरदर्शयत् ॥
तौ च जायापती सूनोः
शिरोरत्नं विलोक्य तत् ।

BKM. ix, 766—930

रक्तांशुकेन संछन्नः
स्थितस्तत्र व्यचिन्तयत् ।
सत्त्वोपकाराय पुन-
र्जन्म भूयान्ममेति सः ॥
ततोऽदृश्यत दिग्दाह-
दारुणच्छविरम्बरे ।
प्रलयाग्निशिखालोल-
पक्षाक्षेपः खगेश्वरः ॥
तस्योरुवेग संघट्ट-
स्फूर्जद्घनघनारवैः ।
चुक्रोशाकालकल्पान्त-
संत्रस्तेव जगत्त्रयी ॥
ततः स तस्य धैर्याब्धि-
र्विद्याधरशिरोमणेः ।
जहार शिरसश्चूडं
चूडारत्नेन मण्डितम् ॥
ततः शरीरमादाय
तस्य तुण्डेन खेचरः ।
गगने वलयाकारं
चकार गतिविभ्रमम् ॥
तच्चञ्चुक्रकचभ्रष्टं
रक्तधारापुरस्सरम् ।
अङ्के मलयवत्यास्तु
चूडारत्नमथापतत् ॥
तद्दृष्ट्वा वज्रसंरुग्णा
शिरीषलतिकेव सा ।
जीमूतकेतवे तन्वी
परित्रस्ता न्यवेदयत् ॥
स्वविद्यया परिज्ञाय
स्वसूनोर्जीवितव्ययम् ।

KSS. xc, 3—201

किमेतदिति सम्भ्रान्तौ-
सहसैव बभूवतुः ॥
ततः स्वविद्यानुध्याना-
द्यथावृत्त मवेत्य तत् ।
राजा जीमूतकेतुः सा
राज्ञी कनकवत्यपि ॥
वध्वा मलयवत्या तौ
प्रावर्तेतां सह द्रुतम् ।
गन्तुं तत्रैव तौ यत्र
तार्क्ष्यं जीमूतवाहनौ ॥
तावत्स शङ्खचूडोत्र
नत्वा गोकर्णमागतः ।
ददर्श रुधिरार्द्रं त-
द्विप्रो वध्यशिलातलम् ॥
हा हतोऽस्मि महापापो
ध्रुवं तेन महात्मना ।
आत्मा गरुत्मते दत्तो
मत्कृते सुकृपालुना ॥
तदन्विष्यामि नीतः स
क्षणेऽस्मिन्क्वाहिवैरिणा ।
मज्जेय नायशः पङ्के
जीवंतं चेत्तमाप्नुयाम् ॥
इत्युदश्रुर्वदान्योऽथ
साधुर्दृष्ट्वा निरन्तराम् ।
पतितां भुवि तद्रक्त-
धारामनुसरन्ययौ ॥

BKM. ix, 766—930

भार्यास्नुषाभ्यां सहितः
सौपर्णीं तां शिलां ययौ ॥
अत्रान्तरे शङ्खचूड-
स्तूर्णं तं देशमागतः ।
गोकर्णमर्णवतटे
प्रणिपत्य मनोजवः ॥
तत्रापश्यन्नखमुखो-
त्खातस्खलितशेखरम् ।
विद्याधरेन्द्रमादाय
तार्क्ष्यमुत्पतितं दिवि ॥
तं वीक्ष्य साश्रुनयनो
विनाघातं विदारितः ।
आत्मानं तद्वधे मत्वा
कारणं विललापसः ॥
हा सत्त्वविपुलौदार्य
धैर्यगाम्भीर्यसागर ।
हा पूर्ण करुणाकोश
हा निष्कारणबान्धव ॥
इति शोचन्सविपद-
मनुसर्तुं गरुत्मतः ।
जगाम जीवितत्याग-
द्रवीकृतविनिश्चयः ॥

KSS. xc, 3—201

अत्रान्तरे भक्षयंस्तं
दृष्ट्वा जीमूतवाहनम् ।
हृष्टं विरम्य गरुड-
श्चिन्तयामास तत्क्षणम् ॥
अहो अपूर्वः कोऽप्येष
भक्ष्यमाणोऽपि यो मया ।
प्रहृष्यति महासत्त्वो
न तु प्राणैर्वियुज्यते ॥
बिभर्ति लुप्तशेषे च
गात्रे रोमाञ्चकञ्चुकम् ।
किं चोपकारिणीवास्य
मयि दृष्टिः प्रसीदति ॥
तन्नैष नागः कोऽप्येष
साधुः पृच्छामि नह्यमुम् ।
इति तार्क्ष्यं विमृश्यन्तं
प्राह जीमूतवाहनः ॥
पक्षीन्द्र किं निवृत्तोसि
न हि मे मांसशोणितम् ।
देहे नास्ति न चाद्यापि
परितृप्तोसि भुङ्क्ष्व तु ॥
एतच्छ्रुत्वाति साश्चर्य-
स्तं पप्रच्छ स पक्षिराट् ।
नागो नैवासि तद्ब्रूहि
महात्मन्को भवानिति ॥
नाग एवास्मि कोऽयं ते
प्रश्नः प्रकृतमाचर ।
प्रस्तुतार्थं विरुद्धं हि
कोऽभिदध्यादबालिशः ॥
एवं प्रतिवदत्येव
तार्क्ष्ये जीमूतवाहने ।

BKM. ix, 766—930

आस्वाद्यास्वाद्य तार्क्ष्योऽपि
व्योम्नि जीमूतवाहनम् ।
क्षिप्रं स्थगितसंरम्भं
प्रदध्यौ विस्मयाकुलः ॥
अहो नु सत्त्ववानेष
कोऽपि धैर्यमहोदधिः ।
भक्ष्यमाणस्य यस्याङ्गे
जायन्ते पुलकाङ्कुराः ॥
प्रसन्नवदनः क्षिप्रं
जीवशेषोऽपि वर्तते ।
चिन्तयित्वेत्य पृच्छत्त्वं
कोऽसीति विनतात्मजः ॥
स तं प्राह किमेतेन
तव भक्षयमामिति ।

अस्मिन्नवसरे शङ्ख-
चूडोऽभ्येत्य तमब्रवीत् ।

KSS. xc, 3—201

प्राप्तः स शङ्खचूडोऽत्र
दूरादेवाभ्यभाषत ॥
मा मा कृथा महापापं
साहसं विनतात्मज ।
कोऽयं भ्रमस्ते नह्येष
नागो नागोऽहमेषते ॥
इत्युक्त्वा द्रुतमागत्य
मध्ये स्थित्वा तयोर्द्वयोः ।
दृष्ट्वा च तार्क्ष्यं विभ्रान्तं
शङ्खचूडोऽब्रवीत्पुनः ॥
किं भ्राम्यसि फणाः किं मे
जिह्वे द्वे च न पश्यसि ।
विद्याधरस्य किं चास्य
सौम्यां पश्यसि नाकृतिम् ॥
शङ्खचूडे वदत्येवं
भार्या च पितरौ च तौ ।
जीमूतवाहनस्यात्र
सर्वे सत्वरमाययुः ॥
विलुप्ताङ्गं च तं दृष्ट्वा
पितरौ तस्य तत्क्षणम् ।
चक्रन्दतुस्तौ हा पुत्र
हा हा जीमूतवाहन ॥
हा कारुणिक हा वत्स
परार्थप्रत्तजीवित ।
हा कथं वैनतेयेद-
मविमृश्य कृतं त्वया ॥
एतच्छ्रुत्वैव तार्क्ष्योऽत्र
सोऽनुतप्तो व्यचिन्तयत् ।
हा कथं बोधिसत्त्वांशः
समोहाद्भक्षितो मया ॥

BKM. ix, 766—930

हा हा मा माकृथास्तार्क्ष्यं
साहसं किं नपश्यति ॥
अस्य विद्याधरेन्द्रस्य
स्वस्तिकाङ्कमुरस्तटम् ।
अहं स नागस्ते भक्ष्यं
पश्यजिह्वालताद्वयम् ॥
विस्फूर्जद्विषफूत्कारं
रत्नस्फीताः फणाश्च मे ।
इदानीमपि मे देहे
मांसशोणितमस्ति भोः ॥
न च पश्यामि ते तृप्तिं
स त्वं दूरे कृतः स्थितः ।
इत्युक्त्वा विपुलं वक्षः
प्रसार्योत्तानविग्रहः ॥
तूर्णं मां भक्षयेत्याह
स सुपर्णं पुनः पुनः ।
ततोऽस्थिशेषं तं त्यक्त्वा
विषण्णे पन्नगेश्वरे ॥
जीमूतवाहनवधू-
गुरुभ्यामाययौ सह ।
दृष्ट्वा मलयवत्यग्रे
प्राणनाथं तथागतम् ॥
मुमोहापूर्वशोकाग्निः
धूमेनेवान्धकारिता ।
जीमूतकेतुस्तनयं
विलोक्य सह जायया ॥
पपात मूलनिर्लूनः
इव चन्दनपादपः ।
तार्क्ष्येणाश्वास्यमानेषु
तेषु जीमूतवाहनम् ॥

KSS. xc, 3—201

जीमूतवाहनः सोऽयं
 परार्थं प्राणदायकः ।
यस्य भ्रमति कृत्स्नेऽस्मि-
 स्त्रैलोक्ये कीर्तिघोषणा ॥

तन्मे मृतेऽस्मिन्पापस्य
 प्राप्तमग्निप्रवेशनम् ।
अधर्मविषवृक्षस्य
 पच्यते स्वादु किं फलम् ॥

इति चिन्ताकुले तार्क्ष्ये
 दृष्ट्वा बन्धूनिपत्य सः ।
व्रणव्यथायां पञ्चत्वं
 प्राप जीमूतवाहनः ॥

ततो विलपतोस्तत्र
 तत्पित्रोः शोकदीनयोः ।
उत्क्रुश्य मुहुरात्मानं
 शङ्खचूडे च विन्दति ॥

भार्या मलयवत्यस्य
 तथा दृष्ट्वाश्रुगद्गदम् ।
पूर्वप्रसन्नां वरदा-
 मित्युपालभताम्बिकाम् ॥

विद्याधराधिपो भावि-
 चक्रवर्ती पतिस्तव ।
भवितेत्यहमादिष्टा
 देवि गौरि तदा त्वया ॥

तन्मिथ्यावादिनी जाता
 त्वमप्यसि कथं मयि ।
इत्युक्तवत्यां तस्यां सा
 गौरी प्रत्यक्षतामगात् ॥

BKM. ix, 766—930

संस्पृश्य पाणिना माता
 शुशोच करुणस्वनम् ।
मुहूर्ताच्छेषजीवोपि
 सोब्रवीज्जननीं शनैः ॥

मातर्विनश्वरस्यास्य
 किं शरीरस्य शोच्यते ।
भवेऽस्मिन्पवनोद्भ्रान्त-
 वीचिविभ्रमभङ्गुरे ।
जायते पुण्ययोगेन
 परार्थे जीवितव्ययः ॥

उक्त्वेति विसृजन्प्राणा-
 नविच्छायमुखच्छविः ।
स्फारेण शोकतमसा
 जगत्संपूरयन्निव ॥

ततो मलयवत्यासी-
 न्मरणे कृतनिश्चया ।
शोकस्तम्भेन संरुद्धा
 न चचाल पपात वा ॥

KSS. xc, 3—201

न मे मिथ्यावचः पुत्रो
    त्युक्त्वा सा स्वकमण्डलोः ।
अमृतेनाशु जीमूत-
    वाहनं सिञ्चतिस्म तम् ॥
तेन सोऽक्षतसर्वाङ्गः
    पूर्वाधिकतरद्युतिः ।
जीवन्सद्यः समुत्तस्थौ
    कृती जीमूतवाहनः ॥
उत्थितं प्रणतं तं च
    सर्वेषु प्रणमत्सुसा ।
उवाचदेवी तुष्टास्मि
    देहदानेन तेऽमुना ॥
तदेषा त्वाभिषिञ्चामि
    पुत्रात्मीयेन पाणिना ।
विद्याधराणामाकल्पं
    चक्रवर्तिपदेऽधुना ॥
एवं वदन्ती जीमूत-
    वाहनं कलशाम्बुभिः ।
तमभ्यषिञ्चच्छर्वाणी
    पूजिता च तिरोदधे ॥
निपेतुश्चात्र तत्कालं
    दिव्याः कुसुमवृष्टयः ।
नदन्ति स्म च सानन्दं
    देवदुन्दुभयो दिवि ॥
अथोवाच स तं प्रह्व-
    स्तार्क्ष्यो जीमूतवाहनम् ।
चक्रवर्तिन्नहं प्रीतः
    पुरुषातिशये त्वयि ॥
अपूर्वोदारमतिना
    त्रिजगत्कौतुकावहम् ।

BKM. ix, 766—930

अथ साक्षाद्भगवती
    गौरी तां भक्तवत्सला ।
समाश्वास्य सुधासारै-
    स्तद्भर्तारमजीवयत् ॥
चक्रवर्तिं श्रियं चास्मै
    दत्वाक्षिप्रं तिरोदधे ।
ततो देवास्सगन्धर्वा-
    स्तस्य सत्वमपूजयन् ॥

गारुडोप्यथ हृष्टात्मा
    वरदस्तेन याचितः ।

KSS. xc, 3—201

ब्रह्माण्डभित्तिलिखितं
येन चित्रमिदं कृतम् ॥
तन्मां प्रशाधि मत्तश्च
वृणुष्वाभीप्सितं वरम् ।
इत्युक्तवन्तं गरुडं
महासत्त्वो जगाद सः ॥
न भक्ष्याः सानुतापेन
भूत्वा नागाः पुनस्त्वया ।
तेऽप्यस्थिशेषा जीवन्तु
ये त्वया पूर्वभक्षिताः ॥
एवमस्तु न भोक्ष्येऽहं
नागांश्छान्तमतः परम् ।
प्राज्ये च भुक्तास्ते जीव-
न्त्विति तार्क्ष्योऽप्युवाच सः ॥
ततोऽस्थिशेषा येऽप्यास-
न्नागास्तत्पूर्वभक्षिताः ।
तेऽपि सर्वे समुत्तस्थु-
स्तद्वरामृतजीविताः ॥
सुरैर्नागैर्मुनिगणैः
सानन्दैर्मिलितैरथ ।
स लोकत्रितयाभिख्या-
मुवाह मलयाचलः ॥
तत्कालं तं च जीमूत-
वाहनोदन्तमद्भुतम् ।
गौर्याः प्रसादाद्विविदुः
सर्वे विद्याधरेश्वराः ॥
आगत्य ते च चरणा-
वनता हिमाद्रिं
निन्युः क्षणान्मुदित-
बन्धुसुहृत्समेतम् ।

BKM. ix, 766—930

प्रददौ सर्वनागानाम्
पुण्यामभयदक्षिणाम् ॥

# CATALOGUE OF SANSKRIT BOOKS

## ॥ संस्कृतग्रन्थानां सूची ॥

### ॥ वैदिकग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| पञ्चसूक्तानि | ० | ३ |
| रुद्रनमकचमकम्—सस्वरम् | ० | ३ |
| सन्ध्यावन्दनम् (याजुषम्) | ० | ३ |
| दर्शतर्पणम् | ० | २ |
| पञ्चायतनपूजा | ० | ३ |
| तैत्तिरीयोपनिषत्— ब्रह्ममेधसहिता सस्वरा | १ | ० |
| त्रिकाण्डसारार्थबोधिनी— (श्रीविद्यामन्त्रभाष्यात्मिका) | १ | ० |
| महात्रिपुरसुन्दरी पूजाकल्पः | ० | १० |
| वैष्णवाह्निकम्—(याजुषम्) | ० | ८ |
| स्मार्ताह्निकम् ,, | ० | १० |
| Vidic Law of Marriage | १ | ४ |
| व्रतरत्नाकरः | १ | ४ |

### ॥ वेदान्तग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| श्रीमद्भगवद्गीता—(मूलमात्रम्) | ० | ८ |
| श्रीमद्भगवद्गीता by A. M. Sastry | ८ | ० |
| श्रीमद्भगवद्गीता—संस्कृतद्रमिडश्लोकैः द्रमिडतात्पर्येण च सहिता | २ | ८ |
| ब्रह्मसूत्राणि—(मूलम्) | ० | ४ |
| उपनिषत्सु (Minor Upanishads Vol. I.) | १ | ० |
| दक्षिणामूर्तिस्तोत्रम्— (Minor Upanishads Vol. II) | २ | ० |
| विवेकचूडामणिः | ० | ८ |

### ॥ पुराणानि-इतिहासग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| बालरामायणम् | ० | २ |
| श्रीमद्वाल्मीकिरामायणम्— मूलमात्रम् (सम्पुटद्वयम्) | ६ | ८ |
| ,, सम्पुटषट्कम् | ८ | ० |
| ,, बालकाण्डः | १ | ४ |
| ,, अयोध्याकाण्डः | १ | १२ |
| ,, आरण्यकाण्डः | १ | ० |
| ,, किष्किन्धाकाण्डः | १ | ० |
| ,, सुन्दरकाण्डः | १ | ८ |
| ,, युद्धकाण्डः | २ | ४ |
| श्रीमन्महाभारतम्—अष्टादश (१८) सम्पुटात्मकम् | ७० | ० |
| श्रीमद्भागवतम् (मूलमात्रम्) | ६ | ८ |

### ॥ तर्क, व्याकरणग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| तर्कसङ्ग्रहः, न्यायबोधिनी— निरुक्ति-पदकृत्यसहितः | १ | ० |
| शब्दमञ्जरी—(दृढपत्रात्मिका) | ० | १२ |
| तिङन्तमञ्जरी—धातुपाठसहिता | ० | ४ |
| लघुसिद्धान्तकौमुदी | १ | ० |

### ॥ निघण्टुग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| अमरकोशः—(मूलमात्रम्) | १ | ० |
| संस्कृतान्ध्रनिघण्टुः | ३ | ८ |

## ॥ काव्यग्रन्था: ॥

| | रू. | अ. |
|---|---|---|
| शिशुपालवधः-८ सर्गपर्यन्तः | १ | २ |
| किरातार्जुनीयम्-सव्याख्यानम् | २ | ८ |
| सुभाषितनीवी व्याख्यानसहिता (मुद्र) | | |
| कुमारसम्भवः सव्याख्यः | २ | ८ |
| कुमारसम्भवः- आङ्गलार्थानुवाद सहितः १, २, ३ सर्गपर्यन्तः | २ | ० |
| भर्तृहरिविरचितनीतिशतकम्— आङ्गलानुवादसहितम् | १ | ० |
| भर्तृहरिशतकत्रयम्-मूलम् | ० | ८ |
| सुभाषितत्रिशती-भर्तृहरिप्रणीता रामचन्द्रविरचितव्याख्यानसहिता | १ | ४ |
| श्रीकृष्णकर्णामृतम्—मूलम् | ० | १२ |
| ,, आङ्गलानुवादसहितम् | २ | ८ |
| हंससन्देशः-सव्याख्यः | ० | ६ |
| यादवाभ्युदयः-अप्पय्यदीक्षितीयव्याख्यानसहितः ४ सर्गपर्यन्तः आङ्गलानुवादतत्प्रतिपदार्थसहितः | २ | ० |
| हंससन्देशः-सव्याख्यःप्रतिपदाङ्गलार्थानुवादाभ्यां सहितः (एतद्व्याख्या चेन्नपुरीय पच्चयप्पकलाशालायां संस्कृतपण्डितेन श्वेतारण्यं नारायणशास्त्रिणा विरचिता) | १ | ८ |
| मार्तण्डोदयम्— शेषशास्त्रि विरचितम् | ० | १२ |
| मेघसंदेशः— मल्लिनाथव्याख्यासहितः | ० | १२ |
| मेघसन्देशः— मल्लिनाथीयव्याख्यासमेतः, सम्पूर्ण पीठिकाङ्गलार्थ विन्यासैः सहितः | २ | ८ |
| रघुवंशः— मल्लिनाथीयव्याख्यासमेतः | ४ | ० |
| रामकर्णामृतम् | ० | १२ |

## ॥ चम्पू, गद्यग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| चम्पूरामायणम्—सव्याख्यानम् | ३ | ८ |
| भोजचरित्रम् | ० | १२ |
| दशकुमारचरितम्-दण्डिविरचितं सव्याख्यानम् | २ | ८ |
| दशकुमारचरितम् — पूर्वभागः with Notes & Translation | २ | ० |
| हर्षचरितम्-तृतीयोच्छ्वासमात्रम् | १ | ८ |
| भाषामञ्जरी (प्रश्नोत्तरे) | ० | ४ |
| हितोपदेशः | १ | ८ |
| विक्रमार्कचरित्रम् | १ | ० |
| मन्दारवती (कपिस्थलं कृष्णमाचार्यविरचिता बृहत्कथामञ्जर्युद्धृताभिनवकथा) | ० | १२ |
| षेक्स्पियर् नाटककथावली | २ | ८ |
| संस्कृतबालशिक्षा— द्राविड प्रतिपदार्थसहिता | ० | ५ |
| ,, आङ्गलप्रतिपदसहिता | ० | ५ |
| ,, आन्ध्रप्रतिपदार्थसहिता | ० | ५ |

## ॥ अलङ्कारग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| काव्यादर्शः—दण्डिविरचितः सव्याख्यः | ५ | ० |
| चन्द्रालोकः—सव्याख्यः | ० | ८ |

|| नाटकग्रन्थाः ||

| | रू. | अ. |
|---|---|---|
| डमरुकम् | ० | ८ |
| अभिज्ञानशाकुन्तलनाटकम् शतावधानम् श्रीनिवासाचार्य विरचितया सभूमिकया व्याख्यया सहितम् | ३ | ८ |
| ,, आङ्ग्लानुवादसहितया संस्कृतपदानुवादपूर्वाङ्गल-टिप्पण्या च समेतम् | ६ | ० |
| वेणीसंहारः व्याख्याद्वयोपेतः | २ | ८ |
| महाकविबोधायनकृत भगवदज्जुकनाटकम्— पीठिकासहितम् | ० | ६ |
| मालविकाग्निमित्रम्— चेन्नपुरीय लायलाकलाशालोपन्यासकैः ए. एच्. कृष्णाराव् महोदयैः विरचिताभिः आङ्ग्लानुवाद टीकाभूमिकाभिः सहितम् | ३ | ८ |
| मृच्छकटिका—शतावधानं श्रीनिवासाचार्यविरचितया व्याख्यया सहिता | ३ | ८ |
| ,, साङ्ग्लानुवादा | ६ | ० |
| उत्तररामचरितं वीरराघवीयव्याख्यासहितं सटिप्पणं च | २ | ८ |
| नागानन्दः | १ | ० |
| नागानन्दः टि. एस्. नारायणशास्त्रि बि. ए. बि एल्. विरचिताभ्यामाङ्ग्लानुवादाङ्गल प्रतिपदार्थाभ्यांसहितः | १ | |
| नागानन्दः पि. वि. रामानुजस्वामिविरचिताभ्यामाङ्ग्लानुवादाङ्गलप्रतिपदार्थाभ्यां सहितः | ३ | |
| महावीरचरितम्— साङ्ग्लानुवादप्रतिपदार्थविन्यासम् | (मुद्रणे) | |
| मालतीमाधवीयम् | ,, | |
| प्रियदर्शिका, नारायणशास्त्रि विरचिताङ्ग्लानुवादसहिता | १ | ० |
| ,, विजयनगर महाराजसंस्कृतकलाशाला प्रधानाध्यापकैः पि. वि. रामानुजस्वामिविरचिताभ्यामाङ्ग्लानुवादाङ्गलप्रतिपदार्थाभ्यां सहिता | ३ | ८ |
| रत्नावळी नाटिका — श्वेतारण्यं नारायणशास्त्रि विरचितया व्याख्यया सहिता पि. वि. रामानुजस्वामि विरचिताभ्यामाङ्ग्लानुवादाङ्गलप्रतिपदार्थाभ्यां सहिता च | ३ | ८ |

|| श्रीमद्वाल्मीकिरामायणम् ||

इदं किल सर्वेषामप्यैहिकामुष्मिकफलाभिलाषिणामर्थज्ञानपूर्वपारायणसौकर्याय द्रमिडप्रतिपदार्थ-तात्पर्याभ्यां संवलितमचिरादेव मुद्रापयिष्यते प्रकाशयिष्यते च ॥

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड सन्स् ,
२९२, एस्प्लनेड्, चेन्नपुरी.